



# महत्वाकांक्षी विद्यार्थियों और उत्साही पुस्तक प्रेमियों के लिए केनरा बैंक की प्रेरणादायक योजनायें

शिक्षा के माध्यम से ज्ञान या पठन के माध्यम से ज्ञानोद्दीपन

केनरा बैंक की दो अनोखी एवं प्रगतिशील योजनाओं के माध्यम से ये दोनों आसानी से हासिल किये जा सकते हैं।




***विद्या सागर*:** उच्चतर शिक्षा प्राप्त करने के लिए कठिन परिश्रम करने के इच्छुक प्रथम श्रेणी के विद्यार्थियों के लिए ऋण योजना। यह ऋण स्कूल/कालेज की फीज़, छात्रावास शुल्क, पाठ्य पुस्तकें, वर्दी से लेकर विदेशों में उच्चतर शिक्षा तक के सभी पहलुओं को प्रावरित करती है। ये ऋण विद्यार्थियों पूर्व/उत्तर स्नातकों और तकनीकी विद्यार्थियों के लिए उपलब्ध हैं।

**ज्ञान गंगा:** तरह-तरह के उपन्यास, व्यापार पुस्तिकायें, व्यावसायिक पुस्तिकायें, एनसाइक्लोपीडिया... वैसे, पाठ्य पुस्तकों को छोड़कर कोई भी पुस्तक अधिग्रहीत करने का सुगम मार्ग ढूँढनेवाले किसी भी व्यक्ति के लिए कम से कम एक साल जो केनरा बैंक का खातेदार रहा हो उसे 1000 रु. से लेकर 5000 रु. तक का ऋण उपलब्ध होगा।




इस असामान्य अवसर का फायदा उठायें। अपने विचार धारा को विस्तृत करके ज्ञानरूपी क्षितिज को बढ़ायें। केनरा बैंक आपकी पूरी मदद करता है।

प्रगतिशील और नवोन्मेषकारी केनरा बैंक ने 1991-92 के दौरान असरदार कार्यनिष्पादन दर्ज किया। इन आंकडों पर एक नज़र डालें।

| | | |
|---|---|---|
| स्वायत्त निधियाँ | — | रु. 779 करोड़ |
| प्रारक्षितियाँ | — | रु. 665 करोड़ |
| निवल लाभ | — | रु. 157 करोड़ |
| लाभांश दर | — | 22% |
| जमाराशियाँ | — | रु. 14238 करोड़ |
| अग्रिम | — | रु. 8000 करोड़ |
| जमा खातों की संख्या | — | 22.6 मिलियन |



**केनरा बैंक**

(भारत सरकार का उपक्रम)

प्रधान कार्यालय, जे.सी. रोड, बेंगलूर-560 002



**हमेशा एक कदम आगे और हमेशा आपके साथ**



R.K SWAMY/BBDO CB 6027 HIN







मैगी-हू-डन्-इट्- क्रीडायां चौरं निगृह्णन्तु।

# विनोदप्रियाणां कृते आश्चर्यकराः पराक्रमाः!

## मैगी-क्लब्- सदस्येभ्यः निःशुल्कं उपहाराः।



मैगी-रेडर्स-ऑफ-द-रेड्-स्टार इति भवतः क्रीडायां चातुर्यपूर्णान् अनभिज्ञान् विरुध्य भवतो विनोदित्वं तोलयन्तु।



भो बालाः! मैगी-क्लब्-सदस्याः भवन्तु तथा मैगी-जगतः पराक्रमेषु प्रविशन्तु।

एतत् केवलं [2-minute] मैगीनूडलस्-रिक्त-पिष्टिकातः पञ्च-प्रथमावरणात् कर्त्तयित्वा स्व-मनोनुकूलं उपहारमधिगन्तुं प्रत्येकं अस्मान् प्रेषयन्तु। षट्सु अष्टसु वा सप्ताहेषु भवन्तो मैगीक्लबतः भवद्रुचेः अनुकूलं आमोदभरितं लोभहर्षकं उपहारं अवाप्स्यन्ति।

स्मर्त्तव्यमिदं यत् स्वमनोनुकूलोपहारेण सार्धं स्वनाम-धामसंकेत-जन्मतिथि मपि अस्मान् प्रेषयन्तु। यदि भवान् मैगी-क्लब्-सदस्यो नास्ति, तदपि भवतः कृते स्वर्णिमोऽयमवसरः। यदा उपरितन - विवरणं प्रेषयति भवान् तदा केवलं सदस्यतावाप्तये निवेदयतु। अपि च, वयं भवतः उपहारेण सार्धं निःशुल्कं मैगी-क्लब्-सदस्यतापत्रमपि प्रेषयिष्यामः।

निःशुल्कं मैगी 'वर्ल्ड आफ एनीमल्स' प्रश्नमाला। प्रत्येकमपि उपहारद्वयं, यद् भवान् अधिगच्छति, तेन सार्धं निःशुल्कं मैगी-'वर्ल्ड आफ' एनीमल्स'-...मपि भवान् अधिगन्तुमर्हति।




अस्माकं संकेतोऽस्ति

**MAGGI CLUB**







# चन्दमामा

संस्थापकः – 'चक्रपाणिः' सञ्चालकः – 'नागिरेड्डी'


## किमर्थं युद्धं प्रवर्तते?

'यस्य हृदयं स्नेहरसेन पूर्णं भवति सः सर्वविधहिंसां तिरस्कारभावेन पश्यति। सः कमपि न पीडयति, खेदयति, संहरति वा। सः वधं तु सर्वथा न इच्छति।'

एतत् सारगर्भितं वचनं महात्मगान्धिमहोदयस्य। एषः ७५ वर्षेभ्यः पूर्वम् भारतीयं परिणीतवत्यै ईस्टर्मेनन्नामिकायै कस्यैचित् आंग्लमहिलायै लिखिते पत्रे एतत् वचनं लिखितवान् आसीत्।

प्रथमजागतिकयुद्धस्य कालः सः। मोहनदास करमचन्द गान्धी दक्षिणाफ्रिकादेशं गत्वा भारतमूलानां जनानां नेतृत्वं वहन् श्वेतजनैः आचर्यमाणायाः वर्णभेदनीतेः विरोधं कृतवान्। ततः गुजरातराज्यं प्रत्यागतः सः, 'दमनकारि आंग्लशासनं समापनीयं चेत् देशे केन प्रकारेण नेतृत्वं निर्वोढव्यम्' इति चिन्तयन् आसीत्।



गान्धीजी एकस्य सर्पस्य सादृश्यं प्रदर्शयन् वदति– "यः सर्पविषये अनुकम्पवान् भवति सः सर्पं न भाययति, सः सर्पं न मारयेत् अपि। सर्पः अपि तं पुरुषं न दशति। एतादृशी मौग्धस्थितिः अस्माभिः सर्वैः अपि प्राप्तव्या। राष्ट्राणि एतादृशीं स्थितिं प्राप्तुं न शक्नुयुः इति भाति मम। सर्वेषु समाना प्रगतिः प्रायः लोके दुःसाध्या। अतः एव देशाः परस्परं युध्यन्ते। वस्तुतः तु यदा ते आत्मानं जेतुं शक्नुवन्ति तदा एव ते सन्मार्गगामिनः इति उच्यन्ते" इति।

गान्धिवर्यस्य वचनं नितरां सत्यं खलु? धनिकनिर्धनराष्ट्रेषु धनिकनिर्धनजनेषु च महान् भेदः स्थितः दृश्यते इदानीम्। एतस्य परिणामतः एव द्वितीयं जागतिकं युद्धं प्रवृत्तम्। तथैव बहूनि लघुयुद्धानि अपि प्रवृत्तानि, प्रवर्तमानानि सन्ति अपि।

गान्धिवर्यस्य जन्मदिनोत्सवाचरणसन्दर्भे (अक्टोबर्-२) वयम् आशास्महे यत् देशाः आत्मानं जेतुं प्रयत्नशीलाः भवन्तु इति।


सम्पुटः–९ अक्टोबर्–१९९२ सञ्चिका–७

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००






# सानन्दं नृत्यत, कैम्पको गीतं गायत!

"इदं दुग्धपूरितं मण्डसमन्वितं स्वादसंयुक्तं स्वप्नसमृद्धम्
मम प्रियतमं चॉकोलेटम् कैम्पको मण्डयुक्तं दुग्ध-चॉकोलेटम् !"

**भारतस्य विशालतम नूतनतम संयन्त्रात्**
कॅम्पको लिमिटेड,मंगळूर



वार्ताविशेषः–

# पृथिव्याः सरंक्षणार्थं प्रयत्नः




संयुक्तराष्ट्रसङ्घेन ब्राजिल्देशस्य रियोडिजनिरोनगरे गते जून्मासे भूमेः संरक्षणम् अधिकृत्य एकः शृङ्गसमावेशः प्रवृत्तः। पर्यावरणकालुष्यतः भूमिः कथं रक्षणीया, भूमेः स्वच्छतायाः सुरक्षायाः च संरक्षणार्थं के के उपायाः आश्रयणीयाः इत्यादिषु विषयेषु चिन्तनं कर्तुं एतत् सम्मेलनम् आयोजितम् आसीत्। एतस्मिन् सम्मेलने ११५ देशस्य प्रतिनिधयः भागं गृहीतवन्तः आसन्। विविधानां देशानां नेतारः एतावत्या सङ्ख्यया आगत्य सोत्साहं भागं गृहीतवन्तः इति तु एतस्य सम्मेलनस्य वैशिष्ट्यम्।

एतस्मिन् सम्मेलने चत्वारः बालकाः अपि भागं गृहीतवन्तः आसन्। ते च – केनडादेशीयौ द्वौ, चिलीदेशीयः एकः, जर्मनीदेशीयः अन्यः च। एतैः बालैः महता उत्साहेन उपस्थापिताः विचाराः समावेशे नवोत्साहतरङ्गान् उदपादयन्।

केनडादेशतः आगता १२ वर्षीया बालिका सिवेर्न् सुजुकी स्वभाषणे एवम् उक्तवती– "अहं भाविजीवनं मनसि निधाय किञ्चित् वदामि। अहं तेषां बालानां प्रतिनिधिः अस्मि, ये च समग्रे विश्वे बुभुक्षया पिपासया च मरणं प्राप्नुवन्तः सन्ति। अहं तेषां पशुपक्षिणां प्रतिनिधिः सती वदामि, ये च मूकाः सन्तः प्रतिक्षणम् एतस्मिन् जगति प्राणैः वियुज्यमानाः सन्ति। आतपे सञ्चारं कर्तुं मम भीतिः– ओजोन्रन्ध्रात् किमपि पतेत् इति। श्वासोच्छ्वाससमये मम भीतिः यत् विषानिलादिभिः दुर्मिश्रितः वायुः मम श्वासकोषं प्रविश्य आयुषः हानिं कुर्यात् इति। भवन्तः एतत् पर्यावरणं सुरक्षितं स्थापयितुम्, उत्तमोत्तमं कर्तुं वा न शक्नुयुः नाम। भवत्सु प्रार्थना अस्ति यत् कृपया एतत् प्रदूषितं मा कुर्वन्तु इति। महता कष्टेन धनं स्वयं सम्पाद्य सुदूरात् देशतः वयम् आगताः। अस्माकम् आशा यत् भवन्तः स्वनीतिं परिवर्तयेयुः इति" इति।

एतस्याः बालिकायाः भाषणं श्रुत्वा सर्वे आनन्दिताः रोमाञ्चिताः च अभवन्। केषाञ्चित् मुखतः आनन्दाश्रूणि अपि निर्गतानि।

समावेशस्य अन्तिमस्य निर्णयस्य एकः अंशः (अजेण्डा-२१) एवम् अस्ति– "अभिवृद्धाः देशाः गतेषु शतकेषु उद्योगावकाशं वर्धयितुम् इच्छन्तः प्राकृतिकसम्पत्तेः लुण्ठनं कृतवन्तः। तथैव पर्यावरणम् अपि नितरां दूषितं कृतवन्तः। अद्यावधि तैः या हानिः प्रपञ्चस्य कृता तस्याः पूरणार्थं तैः अभिवृद्धदेशैः प्रयत्नः करणीयः, महान् व्ययः महान् श्रमः च करणीयः चेदपि तैः एतत् कर्तव्यबुद्ध्या करणीयम् एव" इति।

मानवजातेः प्रगत्यर्थं प्राकृतिकसम्पत्तेः उपयोगः न करणीयः एव इति न।




उपयोगसमये अविवेकिता न स्यात्। यावत् आवश्यकं तावत् एव स्वीकरणीयं, न तु ततोऽपि अधिकम्। यावत् अवशिष्यते तावतः रक्षणम् अपि करणीयं, येन भाविनी जनता तस्याः उपयोगं कुर्यात्। एषः एव 'उत्तमोत्तमः मार्गः' (गोल्डन् मीन्) नाम।

भारतस्य प्रधानमन्त्री श्री पि.वी. नरसिंहरावमहोदयः एतस्मिन् समावेशे भागं वहन् भूमिसंरक्षणार्थम् उपायान् उपदिशन् प्राचीनं कञ्चन श्लोकं भाषणे उद्धृतवान्। स च श्लोकः एवम्–

समुद्रवसने देवि
पर्वतस्तनमण्डले।
विष्णुपत्नि नमस्तुभ्यं
पादस्पर्शं क्षमस्व मे॥ इति।

ब्राजिल्देशस्य अध्यक्षः एतस्य शृङ्गसमावेशस्य उद्घाटनं कुर्वन् विश्वनेतॄन् उक्तवान् यत् नूतनस्य विश्वस्य निर्माणार्थम् एषः प्रायः अद्वितीयः अन्तिमः च अवकाशः, अतः एतत्सन्दर्भे अस्माभिः अप्रमत्तैः भवितव्यम् इति।

पृथिव्याः स्वच्छतां, सुरक्षां, संवर्धनं च इदानीन्तनाः विश्वनेतारः कदाचित् कर्तुं न शक्नुयुः नाम। किन्तु भाविनः युवति-युवकाः एतत् कार्यम् अवश्यं कुर्वन्तः सफलतां प्राप्स्यन्ति एव इत्यत्र तु नास्ति सन्देहः। अग्रिमं शतकम् एतादृशान् भविष्यनिर्मातॄन् स्वागतीकरोति।



# वरदक्षिणापिशाचः

रामेशः कश्चन मध्यमवर्गीयः गृहस्थः। तस्य पुत्री विमला। विमला सुन्दरी। यदा सा प्राप्तवयस्का जाता तदा तस्याः विवाहार्थं रामेशेन प्रयत्नः कृतः। बहूनाम् उत्तमानां वराणां प्रस्तावः आगतः। द्वित्रेषु सन्दर्भेषु जातकानुकूल्यम् अपि आसीत्। किन्तु वरपक्षीयैः या वरदक्षिणा प्रार्थिता तां दातुम् अशक्नुवन् रामेशः तान् प्रस्तावान् तिरस्कृतवान्। 'वरदक्षिणां दातुम् अशक्नुवतः मम पुत्र्याः विवाहः कदा वा सम्भवेत् इति देवः एव जानाति' इति चिन्ताक्रान्तः अभवत् रामेशः।

रामेशस्य आत्मीयं मित्रं मुखेशः। सः नगरे वाणिज्यं करोति। सः कदाचित् वरकुटुम्बं रामेशस्य गृहम् आनायितवान्। वरः शङ्करः नगरे उद्योगी आसीत्। तस्य मातापितरौ ग्रामे तिष्ठन्तौ कृषिकार्यं निर्वहतः। विमला तेषाम् सर्वेषाम् इष्टाय अभवत्। किन्तु तैः वरदक्षिणारूपेण दशसहस्रं रूप्यकाणि पृष्टानि। तेषाम् एताम् अपेक्षां श्रुत्वा रामेशः आश्चर्येण स्तब्धः अभवत्।

सः मुखेशम् अन्तः आहूय उक्तवान्– "किं भोः मुखेश! मम आर्थिकसामर्थ्यं भवान् जानाति एव। एवं स्थिते अपि एतादृशः सम्बन्धः आनीतः खलु भवता? किम् एतत्? मया इदानीं किं वा करणीयम्, ऋते निराकरणात्" इति।

तदा मुखेशः हसन्– "मित्र! अलं चिन्तया। विवाहव्ययं भवान् चिन्तयतु। वरदक्षिणारूपेण यत् दातव्यं तत् इदानीम् अहम् ऋणरूपेण दास्यामि। पुत्र्याः विवाहः समाप्तः चेत् भवतः महान् भारः अपगतः भवति खलु? प्रतिवर्षं किञ्चित् किञ्चित्

"अनामिका"



यथाशक्ति ऋणं प्रत्यर्पयतु" इति उक्तवान्।

ततः विवाहप्रस्तावः पक्षद्वयेन अपि अङ्गीकृतः। उत्तमः मुहूर्तः अपि निश्चितः। रामेशः विवाहसन्नाहे मग्नः अभवत्। मुखेशः उक्तवान् आसीत् यत् विवाहदिनात् दिनद्वयपूर्वम् अहं वरदक्षिणाधनम् आनीय भवते दास्यामि इति। किन्तु उक्ते दिने सः न आगतवान्।

एतत् दृष्ट्वा आश्चर्यम् अनुभवन् रामेशः अनन्तरदिने प्रातः एव मुखेशस्य गृहं प्रति प्रस्थितवान्। तेन यदा नगरं प्राप्तं तदा सूर्यास्तसमयः आसीत्।

बहुषु कार्येषु सत्सु अपि आगतवन्तं रामेशं दृष्ट्वा मुखेशः खेदेन– "हा हन्त ! भवता एव आगतं वा? अन्यतः आगन्तव्यं धनम् अद्य मम हस्तगतं जातम्। श्वः मम मातुः श्राद्धम् अस्ति। तत् समाप्य आगन्तव्यम् इति चिन्तयन् आसम्। तावता भवान् एव आगतः। अस्तु तावत्, भवान् एव धनं नयतु" इति उक्त्वा दशसहस्ररूप्यकयुक्तं धनस्यूतं रामेशाय दत्तवान्।

रामेशः धनं स्वीकृत्य– "मम गृहे कार्याणि बहूनि सन्ति। अतः इदानीम् एव अहम् इतः प्रस्थानं करिष्यामि" इति उक्त्वा ततः निर्गतवान्।

प्रतिगमनसमये रात्रिकालः आसीत् इत्यतः शकटं किमपि न प्राप्तं तेन। सः पादाभ्याम् एव प्रयाणं कृतवान्।

एवं गमनसमये यदा सः अरण्यमार्गेण गच्छन् आसीत् तदा कश्चन चोरः अकस्मात् प्रत्यक्षीभूय– "अये, भवत्समीपे यावत् धनम् अस्ति तावत् मह्यं ददातु" इति क्रोधेन उक्तवान्।

नितरां भीतस्य रामेशस्य मुखात् किमपि वचनं न निर्गतम्। तावता चोरः अग्रे आगत्य रामेशं स्पृष्ट्वा परीक्ष्य धनं बलात् स्वीकृत्य अन्धकारे कुत्रापि अदृश्यतां गतवान्। 'इतः परं पुत्र्याः विवाहम् एतस्मिन् जन्मनि अहं कर्तुं न शक्नोमि' इति चिन्तयन् रामेशः खेदेन ततः अग्रे गतवान्।

किञ्चिद्दूरं यदा गतं तदा एकं शिथिलं गृहं प्राप्तम्। गृहस्य पुरतः उभौ पिशाचौ

शैत्यनिवारणार्थम् अग्निं प्रज्वाल्य तस्य पाश्र्वे उपविष्टवन्तौ आस्ताम्। तयोः सम्भाषणे विमलायाः नाम्नः प्रस्तावः आसीत्। अतः विना शब्दं स्थित्वा सम्भाषणं श्रुतवान् रामेशः।

"विमलायाः विवाहः तु श्वः रात्रौ निश्चिते मुहूर्ते प्रचलिष्यति एव" इति अवदत् एकः पिशाचः।

"कथं शक्यते तत्? वरदक्षिणादानार्थं सङ्गृहीतं धनं चोरेण खलु अपहृतम्?" इति अवदत् अपरः पिशाचः।

"भवतः दृष्टिः मन्दा जाता वा? सः चोरः सर्पेण दष्टः सन् तत्रैव वृक्षस्य अधः पतितः, मृतः च। अतः तत् धनं कुत्रापि न गतम्" इति अवदत् प्रथमः पिशाचः।

एतत् वचनं श्रुत्वा रामेशः– 'अहो! देवो दयालुः!' इति वदन् ततः वेगेन प्रतिगत्य वृक्षसमीपं गतवान्। तत्र मृतः चोरः तेन दृष्टः। चोरसमीपे एतस्मात् वशीकृतः धनस्यूतः अन्यानि बहुविधानि आभरणानि च आसन्।

'पुत्र्याः विवाहस्य अनन्तरम् आभरणानि ग्रामरक्षकाधीनानि करणीयानि' इति चिन्तयन् रामेशः सर्वाणि आभरणादीनि अपि स्वीकृत्य गृहं गतवान्।

मार्गे प्रवृत्तं श्रुत्वा रामेशस्य पत्नी– "सर्वं भगवतः दया" इति उक्त्वा ससन्तोषं दीर्घं निश्श्वसितवती।



सायङ्काले वरपक्षीयाः आगताः। विमलायाः भगिनी यदा वरपक्षीयेभ्यः शीतलपानकं यच्छन्ती आसीत् तदा वरस्य भगिनी मातरम् उक्तवती– "अम्ब! अत्र पश्यतु। अवगुण्ठनधारी चोरः आगत्य आभरणानि अस्मद्गृहतः चोरितवान् आसीत् खलु? तानि आभरणानि एतस्याः शरीरे दृश्यन्ते" इति।

आभरणानि दृष्ट्वा आकृष्टा विमलायाः भगिनी– 'अद्य एकं दिनं धरामि। श्वः किल भवान् ग्रामरक्षकाय एतानि ददाति?' इति उक्त्वा मातापित्रोः अनुमतिं प्राप्य आभरणानि धृतवती आसीत्।

वरस्य माता विमलायाः भगिन्याः हस्तौ

गृहीत्वा– "मम गृहात् चोरितानि एतानि आभरणानि कथं भवत्याः शरीरे सन्ति? चोरस्य भवद्गृहस्य च कोऽपि सम्बन्धः स्यात्" इति क्रोधेन उक्तवती।

तावता रामेशः तत्र आगतः। "एतानि आभरणानि कथम् अत्र आगतानि?" इति तं क्रोधेन पृष्टवती वरस्य माता।

"मृतात् कस्माच्चित् चोरात् प्राप्तानि एतानि" इति उक्त्वा प्रवृत्तं समग्रं निवेदितवान् रामेशः।

"असत्यम् एतत्। चोरद्वारा भवद्भिः एतानि चोरितानि। चोरसम्बन्धः यस्य गृहस्य अस्ति तस्य गृहस्य वधूः अस्माकं मास्तु एव" इति उक्त्वा आभरणानि बलात् स्वीकृत्य वरपक्षीयाः सर्वे ततः निर्गतवन्तः।

तस्यां रात्रौ रामेशगृहे केनापि निद्रा न प्राप्ता। 'अहो, दुर्विधिः' इति सर्वे खेदम् अनुभवन्ति। प्रातःकाले द्वारताडनशब्दः श्रुतः। विमला गत्वा द्वारम् उद्घाटितवती। रामेशः तत्पत्नी चापि द्वारसमीपम् आगतवन्तौ। द्वारस्य पुरतः शङ्करः स्थितः आसीत्। सः रामेशम् उक्तवान्– "यदि भवताम् अनुमतिः स्यात् तर्हि भवतोः पुत्रीं परिणेतुं सिद्धः अहम्। वरदक्षिणा काऽपि मास्तु मम" इति।

एवं शङ्कर-विमलयोः विवाहः निश्चिते मुहूर्ते प्रवृत्तः। तस्मिन् दिने सायं विमला शङ्करं पृष्टवती– "मातापित्रादिभिः सह भवान् अपि गतवान् आसीत् खलु? कथं मध्ये मनःपरिवर्तनं जातम्? वरदक्षिणा मास्तु इति



कथं निर्णीतम्?'' इति।

तदा शङ्करः मन्दहासपूर्वकम् उक्तवान्– ''विवाहः स्थगितः इति खिन्नः अहं मातापितृभ्यां सह ग्रामं गन्तुम् अनिच्छन् नगरं प्रति प्रस्थितवान्। गमनसमये मार्गस्य पार्श्वे वृक्षस्य अधः शैत्यनिवारणार्थं द्वौ पिशाचौ उपविष्टौ मया दृष्टौ। तयोः सम्भाषणे मम नाम अपि आसीत्। अतः अहं वृक्षस्य पृष्ठतः स्थित्वा सर्वं श्रुतवान्।

एकः पिशाचः अपरम् अपृच्छत्– ''यस्य कारणतः विमलायाः विवाहः स्थगितः तद्विषये किं वदति भवान्?'' इति।

तदा अपरः पिशाचः अवदत्– ''तत् वदामि। प्रथमं भवान् वदतु। भवान् किमर्थं पिशाचरूपं प्राप्तवान्?'' इति।

''यदा अहं मानवः आसं तदा बहूनि चौर्याणि कृतवान्। द्वित्रान् मारितवान् अपि। मृतानां परिवाराणां जनाः मां निन्दितवन्तः। एतस्य पापस्य कारणतः मया एतत् जन्म प्राप्तम्'' इति उक्त्वा ''भवान् कथम् एतत् जन्म प्राप्तवान्?'' इति अपृच्छत् प्रथमः पिशाचः।

तदा अपरः पिशाचः अवदत्– ''मम उभौ पुत्रौ। तयोः विवाहसमये मया वधूपक्षीयौ वरदक्षिणार्थं बहुधा पीडितौ। एकस्याः वध्वाः पिता मम कारणतः प्राणान् अत्यजत्। अपरः भ्रष्टमतिः अभवत्। स्नुषे अपि मया सम्यक् पीडिते। एतस्य सर्वस्य कारणतः मया एतत् जन्म प्राप्तम्'' इति।

''आवाभ्यां यत् पापादिकं कृतं तस्य फलम्



अनुभूयते इदानीम्। 'अवश्यम् अनुभोक्तव्यं कृतं कर्म शुभाशुभम्' इति पूर्वजाः यत् वदन्ति तत् युक्तम् एव'' इति अवदत् प्रथमः पिशाचः।

किञ्चित्कालानन्तरम् अपरः पिशाचः अवदत्– ''शङ्करस्य विषयं पृच्छन् आसीत् खलु भवान्? शङ्करेण तत्परिवारजनैः च वरदक्षिणाप्रार्थनया विमलायाः परिवारः पीडितः। एतावदेव न, चौर्यं कारितम् इति मिथ्यारोपः अपि कृतः। भाविश्वशुरेण वस्तुस्थितिः निवेदिता चेदपि शङ्करः विमलायाः परिणयं निराकृत्य प्रतिगतवान्। इतः परं दौर्भाग्यवतीं विमलां परिणेतुं को वा सिद्धः भवेत्? एवं बहुधा पापम् आचरितवतः शङ्करस्य मरणानन्तरं पिशाचत्वं निश्चितम् एव'' इति।

''पिशाचजन्म नीचम् इत्यतः शङ्करस्य गतिं स्मरतः मम दुःखं भवति। वयं किं वा करवाम? तत्तस्य कर्मणः फलं स सः अनुभवति। लोके सर्वे यदि सज्जनाः स्युः तर्हि अस्माकं परिवारः न वर्धेत खलु? अतः यत् जायते तत् सन्तोषाय एव'' इति अवदत् प्रथमः पिशाचः। एतावत् उक्त्वा उच्चैः अहसत् च।

एवं प्रवृत्तं निवेद्य शङ्करः विमलाम् उक्तवान्– ''विमले! ऐदम्प्राथम्येन अहं पिशाचाकारं दृष्टवान् खलु? अतः प्रथमदर्शने तु मम महती भीतिः आसीत्। किन्तु तौ सत्प्रवृत्तिमन्तौ पिशाचौ। तयोः पिशाचयोः वार्तालापतः ज्ञातं यत् भवत्याः पिता निरपराधी इति। अतः अहं भवतीं परिणेतुं निश्चितवान्। वरदक्षिणायाः परिणामः मया प्रत्यक्षं दृष्टः अपि। अतः वरदक्षिणा-स्वीकारविचारं परित्यक्तवान्। भवतीं यदि न परिणयेयं तर्हि अहम् अपराधी अभविष्यम्। अतः भवती परिणीता मया'' इति।

शङ्करमुखात् सर्वं श्रुत्वा विमला तौ पिशाचौ कृतज्ञतापूर्वकं मनसा नमस्कृतवती। अनन्तरदिने सा पत्याः सह पतिगृहं गतवती च।






# मायाभवनम्

## ५

(सारससरोवरे स्थिता राजकुमारी विद्यावती कदाचित् अदृश्यतां गतवती। सा कथम् अदृश्यतां गता, केन सा अपहृता स्यात् इति राज्ञा न ज्ञातम्। महाराजस्य आज्ञायाः अनुगुणं सेनापतिः उग्रसेनः चतसृषु दिक्षु भटान् प्रेषितवान्। युवराज्ञीम् अन्वेष्टुम् एकाकितया गन्तुम् इच्छन् कश्चन युवकः राज्ञः अनुज्ञां प्राप्तुं राजप्रासादम् आगतवान्। तदनन्तरम्....)

भटेन सह आगतः सः युवकः राज्ञः पुरतः स्थित्वा विनयेन राजानं नमस्कृतवान्। राजा तं नखशिखान्तं सकृत् परीक्षादृष्ट्या दृष्टवान्। तस्य युवकस्य वेषभूषादिकं सामान्यम् आसीत्। किन्तु तदीयः व्यवहारः गम्भीरः आसीत्। मुखे काचित् विलक्षणा कान्तिः दृश्यते स्म।

'सेनापतिः एतस्य युवकस्य विषये यत् उक्तवान् तत् सत्यम् एव' इति अवगतवान् राजा।

सेनापतिः किञ्चित् अग्रे आगत्य उक्तवान्– "प्रभो, एषः सः एव युवकः, यश्च राजकुमार्याः अन्वेषणार्थं गन्तुं भवतः अनुज्ञां प्रार्थयते" इति।

तदा राजा तं युवकं पृष्टवान्– "भोः, कः भवान्? किं नाम भवतः? राजकुमार्याः



अन्वेषणार्थं सर्वासु दिक्षु अस्माकं सैनिकाः गताः आसन्, निराशया प्रत्यागताः सन्ति अपि। केचन इतोऽपि अन्वेषणप्रयत्ने निरताः सन्ति। भवान् एकाकितया गत्वा अन्वेषणं कर्तुम् इच्छति इति श्रूयते। किम् एतत् शक्यं भवता? राजकुमारी कदाचित् दृष्टा चेत् अपि तस्याः अभिज्ञानं कथं प्राप्नोति भवान्?" इति।

सः युवकः राजानं नमस्कृत्य उक्तवान्–"महाराज! प्रतिवर्षं युवराज्ञ्याः जन्मदिनम् आचर्यते खलु? तदा अहं मार्गपार्श्वे एव स्थित्वा शोभायात्रां पश्यामि स्म। अतः युवराज्ञीं विनायासम् अभिज्ञातुं शक्नोमि अहम्" इति।

"तदस्तु, स्वस्य परिचयः न उक्तः खलु भवता" इति उक्तवान् राजा।

"मम नाम महेन्द्रनाथः इति। नगरसीमायां देव्याः आलयः अस्ति खलु? तस्य समीपे अहं मात्रा सह निवसामि। यदा अहं त्रिवर्षीयः आसं तदा मम पिता दिवङ्गतः। अतः अहं मम माता च पितृव्यस्य अधीनौ जातौ। किन्तु दौर्भाग्यवशात् अचिरात् एव पितृव्या दिवङ्गता। पत्नीवियोगतः खिन्नः विरक्तः च पितृव्यः अस्मान् परित्यज्य कुत्रापि निर्गतवान्। ततः पुष्पाणि सङ्गृह्य मालां रचयित्वा विक्रीय प्राप्तेन अल्पेन धनेन माता मां पोषितवती। यदा अहं धनसम्पादनसमर्थः जातः तदा आरभ्य अहं मातरं पोषयन् अस्मि" इति स्वस्य इतिवृत्तं निवेदितवान् सः युवकः।

राजा तं सहानुभूत्या पश्यन् उक्तवान्–"मित्र! भवता यस्मिन् कार्ये प्रवर्त्यते तच्च कार्यं न हि सरलम्। अनेकानि कष्टानि तत्र अनुभोक्तव्यानि भवेयुः। एषः अंशः लक्षितः एव खलु भवता?" इति।

"आं लक्षितः। पूर्वापरं परिशील्य साधकबाधकं विविच्य एतत् कर्तुं सन्नद्धः जातः अस्मि। युवराज्ञ्याः अन्वेषणार्थं गतं चेत् प्रत्यागमने दीर्घः कालः अतीतः स्यात्। तावत्कालं मम मातुः पोषणं कथम् इत्येव प्रधाना समस्या मम। एतस्याः परिहारार्थं साहाय्यम् आवश्यकम् इति सेनाधिपतिं

प्रार्थितवान् अस्मि'' इति उक्तवान् महेन्द्रनाथः।

''आम्! भवतः अपेक्षां सेनाधिपतिः मां निवेदितवान् अस्ति। एतद्विषये यथोचितं वयं करिष्यामः एव। यदि एतस्मिन् कार्ये भवान् साफल्यं प्राप्नुयात् तर्हि पुरस्कारराशिना भवन्तं सत्करिष्यामः वयम्। एतदतिरिच्य अन्या काऽपि अपेक्षा अस्ति चेत् वदतु तावत्'' इति उक्तवान् महाराजः।

''प्रभो, पुरस्कारस्य आशया अहम् एतस्मिन् कार्ये न उद्युक्तः। पुरस्कारापेक्षा सर्वथा नास्ति मम। यदा एतादृशी कष्टपरिस्थितिः आगच्छति तदा सर्वैः अपि नागरिकैः यथाशक्ति साहाय्यं करणीयम् एव। अतः कर्तव्यबुद्ध्या अहम् एतस्मिन् कार्ये उद्युक्तः अस्मि। राजधान्याः समीपे स्थिताः अरण्यप्रदेशाः सर्वे मम सुपरिचिताः। अतः अहम् एतत् कार्यं कर्तुं सिद्धः सन् भवतः अनुज्ञां प्रार्थयन् अस्मि'' इति उक्तवान् महेन्द्रनाथः।

''अस्तु तर्हि। अनुज्ञा दत्ता अस्ति। एतदर्थं कदा निर्गमनं भवेत् भवतः?'' इति पृष्टवान् राजा।

''श्वः एव निर्गमिष्यामि प्रभो। कोऽपि सन्नाहः तु मया करणीयः नास्ति। किन्तु ....'' इति स्ववाक्यम् अर्धे स्थगितवान् महेन्द्रनाथः।

''किम् अन्यत् ...?'' इति आश्चर्येण



पृष्टवान् राजा। उग्रसेनः अपि आश्चर्येण महेन्द्रनाथं दृष्टवान्।

''महाराज! अहं तु युवराज्ञीम् अभिज्ञास्यामि। किन्तु मम समस्या नाम अहं भवतः अनुज्ञायाः अनुगुणम् .व आगतः इति युवराज्ञी कथं वा जानीयात् इति। एषः प्रश्नः इदानीं मम मनसि आगतः'' इति उक्तवान् महेन्द्रनाथः।

''भवतः समस्या अवगता मया। अदृष्टपूर्वं भवन्तं राजकुमारी अभिज्ञातुं न शक्नुयात् एव। अपाये स्थिता सा अपरिचिते भवति यदि सा न विश्वस्यात् तर्हि तत्र आश्चर्यं नास्ति'' इति उक्तवान् राजा।

''राजकुमारी मयि यथा विश्वस्यात् तथा



कर्तुम् अभिज्ञापकं किमपि दत्तं चेत् वरं भवेत्'' इति सूचितवान् महेन्द्रनाथः।

''प्रभो, युवराज्ञी यथा अभिजानीयात् तथा वस्तुविशेषः एतस्मै दातुं शक्येत। किन्तु तथा दानं वरं न इति मम आशयः। यतः तत् वस्तु मध्येमार्गं कुत्रापि पतेत् चेत्, केनापि अपहृतं चेत् वा अपायः निश्चितः'' इति उक्तवान् उग्रसेनः।

''आं, भवता यत् उच्यते तत् युक्तम् एव इति भाति ममापि'' इति उग्रसेनम् उक्त्वा पुनः महेन्द्रनाथं पश्यन् उक्तवान् राजा– ''युवराज्ञ्याः दक्षिणबाहौ एकं जन्मजातं कालकम् अस्ति। एतम् अंशं महाराज्ञी अहं च जानीवः, न अन्ये। अतः भवान् यदा युवराज्ञीं द्रक्ष्यति तदा एतम् अंशं वदतु। तदा युवराज्ञी जानाति यत् भवान् मया एव प्रेषितः इति। एषः अंशः अन्येन केनापि यथा न ज्ञायेत तथा जागरूकता आश्रयणीया भवता। भवतः मातुः संरक्षणस्य व्यवस्थां सेनापतिः करिष्यति। अतः भवान् निश्चिन्ततया श्वः गन्तुम् अर्हति। युवराज्ञ्याः अन्वेषणे जयं प्राप्य शुभवार्तया सह भवान् प्रत्यागमिष्यति इति विश्वसिमः वयम्'' इति उक्त्वा राजा अन्तःपुरं गतवान्।

''सायङ्काले भवान् मातरम् अत्र आनयतु। अग्रिमव्यवस्थाविषये तदा वार्तालापं करिष्यामः'' इति सूचितवान् सेनापतिः।

महेन्द्रनाथः गृहं गतवान्। यदा सः गृहं प्राप्तवान् तदा तदीया पूजार्थं मालां रचयन्ती आसीत्।

''अम्ब! अहं महाराजस्य दर्शनं प्राप्य आगच्छन् अस्मि'' इति सन्तोषेण उक्तवान् महेन्द्रनाथः।

''किम् उक्तं भवता? महाराजस्य वीरसेनस्य दर्शनं प्राप्तम् इति? सत्यं वा एतत्? राजास्थाने कोऽपि उद्योगः प्राप्तः वा भवता?'' इति आश्चर्येण आनन्देन च पृष्टवती माता।

''उद्योगः तु कालान्तरे प्राप्येत। युवराज्ञ्याः अन्वेषणार्थं गन्तुं महाराजेन अनुज्ञा दत्ता'' इति उक्तवान् महेन्द्रनाथः।



"किम् उक्तम्? युवराज्ञ्याः अन्वेषणार्थं गमनम् इति? परिहासार्थम् उक्तं वचनं न खलु एतत्? तां कुत्र अन्विष्यति भवान्? अरण्ये एकाकिनः भवतः अटनम् अपायकरं खलु? यदि भवान् गच्छेत् तर्हि मम योगक्षेमं को वा निर्वहेत्?" इति चिन्तामिश्रितेन स्वरेण पृष्टवती माता।

"काऽपि चिन्ता मास्तु अम्ब! युवराज्ञीम् अन्विष्य सकुशलं प्रत्यागमिष्यामि इति दृढः विश्वासः अस्ति मम। यावत् अहं न प्रत्यागमिष्यामि तावत् भवत्याः योगक्षेमस्य व्यवस्थां राजा निर्वक्ष्यति। सायम् आवाभ्यां सेनाधिपतिः द्रष्टव्यः। तदा एव भवत्याः सर्वाः समस्याः निवृत्ताः भविष्यन्ति" इति उक्तवान् महेन्द्रनाथः।

सायं सः मात्रा सह सेनापतेः उग्रसेनस्य समीपं गतवान्। उग्रसेनः महेन्द्रनाथस्य मातरम् आदरेण उपवेश्य– "अम्ब! भवत्याः पुत्रः साहसकार्ये उद्युक्तः अस्ति इति तु सत्यम्, किन्तु सः जयं प्राप्य सकुशलं प्रत्यागमिष्यति इत्यत्र नास्ति सन्देहः। यावत् सः न प्रत्यागमिष्यति तावत् भवत्याः रक्षणस्य भारः अस्माकम्। दिने त्रिवारं भवत्यै राजभवनतः आहारः प्रेषयिष्यते। कस्यचित् सैनिकस्य पत्नी भवत्या सह तिष्ठन्ती भवत्याः योगक्षेमं निर्वक्ष्यति। अतः काऽपि चिन्ता मास्तु भवत्याः। पुत्रं पूर्णेन मनसा आशीर्वादेन अनुगृह्य प्रेषयतु भवती" इति उक्तवान्।

अनन्तरं सः महेन्द्रनाथं पश्यन्– "मातुः योगक्षेमनिर्वहणस्य विषये काऽपि चिन्ता मास्तु भवतः। अरण्ये पश्चिमदिशि अन्वेषणप्रयत्नः वरम् इति वाचस्पतिमिश्रेण यत् उक्तं तत् मनसि भवतु। महाराजेन यत् उक्तं तत् कदापि न विस्मर्तव्यम्। श्वः प्रातः एव इतः निर्गच्छतु भवान्। विजयी सन् सर्वान् तोषयतु। शुभाः सन्तु पन्थानः" इति उक्तवान्।

ततः महेन्द्रनाथः तन्माता च तृप्त्या ततः निर्गतवन्तौ। अनन्तरदिने प्रातः महेन्द्रनाथः मातरं साष्टाङ्गं नमस्कृत्य देवं चापि प्रणम्य मात्रा दत्तं पाथेयं स्वीकृत्य

सारससरोवरदिशि प्रस्थितवान्।

सारससरोवरं तेन इतः पूर्वं न दृष्टम् आसीत्। अतः सः आश्चर्येण सारससरोवरं दृष्टवान्। अनन्तरं सरोवरं परितः परीक्षादृष्ट्या अटितवान्। नौकाघट्टे नौका स्थिता आसीत्। नाविकः च ततः अनतिदूरे वृक्षस्य अधः उपविष्टः आसीत्। महेन्द्रनाथं दृष्ट्वा सः उत्थाय नमस्कृत्य पृष्टवान्— "श्रीमन्! भवान् राजभवनतः आगच्छन् अस्ति वा?" इति।

"किमर्थम् एवं पृष्टं भवता?" इति प्रतिप्रश्नं कृतवान् महेन्द्रनाथः।

"युवराज्ञ्याः विषये सन्तोषकरी वार्ता प्राप्येत इति आशया पृष्टं मया। अन्यच्च सा वृद्धा परिचारिका एकाकिनी अत्र तिष्ठति। यावत् राजकुमारी न प्रत्यागमिष्यति तावत् प्रायः तया अत्रैव स्थातव्यं स्यात्। एकाकिन्याः तस्याः अत्र वासः कारागारतल्यः एव। आहारदानार्थं ये परिचारिके प्रतिदिनम् आगच्छतः ताभ्यां सह अपि एषा अधिकं सम्भाषणं न करोति। वृद्धायाः तस्याः दुर्दशां दृष्ट्वा अहं खेदम् अनुभवामि। एतस्याः इतः मोक्षः सद्यः स्यात् वा? इति ज्ञातुम् इच्छन् पृष्टवान् अहम्" इति उक्तवान् सः नाविकः।

"युवराज्ञ्याः विषये किमपि न ज्ञातम्। अतः अहं तस्याः अन्वेषणार्थं प्रस्थितः अस्मि" इति उक्तवान् महेन्द्रनाथः।

"अहो, एवं वा? सन्तोषकरी वार्ता एषा। एतस्मिन् प्रयत्ने सफलः भवतु भवान्। ते दुष्टाः युवराज्ञीम् एतेन मार्गेण न नीतवन्तः। अपहरणार्थं तैः अन्यः कोऽपि मार्गः आश्रितः" इति उक्तवान् नाविकः।

"अहं सरोवरस्य परिक्रमणं कृत्वा सर्वं परिशीलयिष्यामि। कोऽपि नूतनः मार्गः दृष्टः चेत् तम् अनुसरिष्यामि" इति उक्त्वा ततः अग्रे गतवान् महेन्द्रनाथः।

"दैवानुग्रहेण भवतः प्रयत्नः सफलः भवतु। शुभवार्ताम् आनयतु भवान्" इति उक्तवान् नाविकः। —(अनुवर्तते)



# आकाशचुम्बी दण्डः

पूर्वं कश्चन भूस्वामी आसीत्। रामः श्यामः चेति विदूषकौ तम् आश्रित्य तिष्ठतः स्म। कदाचित् सायं वायुविहारार्थं भूस्वामी ग्रामात् बहिः प्रस्थितवान्। रामः श्यामः च तम् अनुसृतवन्तौ। मार्गम् उभयतः स्थितं हरिद्वर्णोपेतं क्षेत्रं प्रदर्शयन् खेदमिश्रितेन स्वरेण उक्तवान् रामः– "श्रीमन्, मार्गम् अभयतः स्थितम् एतत् सुविशालं समृद्धं क्षेत्रं पूर्वं मम प्रपितामहस्य आसीत्" इति।

तदा अपरः विदूषकः श्यामः उक्तवान्– "आं श्रीमन्! रामः यत् वदति तत् सत्यम् एव। एतस्य प्रपितामहस्य सुविशाले क्षेत्रे मम प्रपितामहः एव वर्षणं कारयति स्म। मम प्रपितामहस्य समीपे एकः आकाशचुम्बी दण्डः आसीत्। सः तेन आकर्षणदण्डेन आकाशस्थान् मेघान् आकृष्य कम्पयन् वृष्टिं कारयति स्म" इति।

"तावद्दीर्घः आकर्षणदण्डः! तं दण्डं कुत्र स्थापयति स्म भवतः प्रपितामहः?" इति हसन् पृष्टवान् भूस्वामी।

"सः दण्डः इति अस्माभिः भाव्यते। किन्तु मम प्रपितामहः तं सामान्यां शलाकां भावयति स्म। अतः तं दण्डं सः एतस्य प्रपितामहस्य क्षेत्रे कुत्रापि स्थापयति स्म" इति उक्तवान् श्यामः।

"एवं तर्हि सः दण्डः इदानीं कुत्र?" इति हसन् एव पृष्टवान् भूस्वामी।

"श्रीमन्! क्रोधः महानर्थकारी इति उच्यते खलु? केनचित् कारणेन कुपितः मम प्रपितामहः कदाचित् तस्य दण्डस्य साहाय्येन मेघान् सम्यक् कम्पितवान्। तस्य परिणामतः दिनत्रयं यावत् धाराकारेण वृष्टिः जाता। ततः यः प्रवाहः उत्पन्नः तेन एषः दण्डः अपि नीतः। शिलादीनां घर्षणेन स च दण्डः बहुधा छिन्नः अभवत् च" इति श्यामः उक्तवान् खेदेन।

तदा रामः उक्तवान्– "श्रीमन्! यदा सः दण्डः नष्टः तदा वृष्टेः अभावः जातः। क्षेत्राणि शुष्काणि अभवन्। एतेन खिन्नः मम प्रपितामहः सर्वाणि क्षेत्राणि सर्वेभ्यः दत्तवान्। इदानीं किं, एकर्द्वयमिता भूमिः अपि नास्ति मम" इति।

एतां विचित्रां कथां श्रुत्वा नितरां हसितवान् भूस्वामी। सन्तुष्टः सः रामाय श्यामाय च योग्यं पारितोषिकं दत्तवान् च।






# मान्त्रिकः कूबरः

वीराधिवीरः इति कीर्तिं प्राप्तवान् अहं यदि वेतालं वशीकर्तुं न शक्नुयां तर्हि तत् मम अपमानाय इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोपितवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवतः लोकज्ञानं शक्तिः सामर्थ्यं च अपूर्वम्। वंशपारम्पर्येण प्राप्तं राजत्वं तु अस्ति एव। अतः राज्यपालनं कुर्वता भवता सुखेन जीवनं यापनीयम्। किन्तु भवान् एवं मध्यरात्रे घोरे श्मशानमार्गे बहुविधानि कष्टानि अनुभवन् अस्ति। किमर्थम् एतादृशः व्यवहारः भवतः? किं सार्वभौमत्वम् इच्छति भवान्? सार्वभौमत्वं प्राप्तव्यं चेत् अकुण्ठिता दीक्षा स्यात्। अन्यदायित्वं येषां नास्ति ते अकुण्ठितदीक्षावन्तः भवेयुः। भवतः तु

वेतालकथा



राज्यपालनादीनि बहूनि कार्याणि सन्ति। एवं स्थिते किम् अभीप्सितं साधयेत् भवान्? दीक्षाभङ्गस्य कारणानि बहूनि भवितुम् अर्हन्ति। दयाकारुण्यादयः अपि दीक्षाबद्धतां शिथिलीकुर्वन्ति। पूर्वं कूबरनामकस्य मान्त्रिकस्य जीवने अपि एवम् एव जांतम्। तस्य कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्, येन भवतः मार्गायासः परिहृतः भवेत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा–

अवन्तिदेशस्य राजकुमारी स्वर्णलता। अपूर्वसुन्दरी इति ख्याता आसीत् सा। तां परिणेतुम् इच्छन्तः बहवः राजकुमाराः स्वचित्रपटान् अवन्तिराजं प्रति प्रेषितवन्तः।

एतत् ज्ञात्वा स्वर्णलता पितरम् उक्तवती– ''विवाहतः पूर्वं कन्या पित्रधीना भवति। यस्मै राजकुमाराय अहं दत्ता चेत् देशस्य हितं सिद्ध्येत् तस्मै मां ददातु। विवाहविषये भवान् यथा वदति तथा आचरामि अहम्। अतः देशस्य हितं विचिन्त्य भवान् स्वस्य आशयं वदतु'' इति।

तदा राजा– ''वत्से, एतत् चित्रपटं पश्यतु। एषः नीहारदेशस्य युवराजः। एषः भवत्या परिणीतः चेत् सर्वं समीचीनं भवेत्'' इति उक्त्वा एकं चित्रपटं स्वर्णलतायै दत्तवान्।

चित्रपटं दृष्टवत्याः स्वर्णलतायाः मुखं म्लानम् अभवत्। यतः नीहारदेशस्य युवराजः दुष्टः, नीचः, प्रजापीडकः च इति प्रसिद्धः। अन्यच्च सः कुरूपी अपि।

पुत्र्याः मुखे जातां म्लानतां दृष्ट्वा उक्तवान् राजा– ''वत्से! भवती विदेहदेशस्य राजकुमारे चित्रसेने अनुरक्ता इति अहं जानामि। यदि सः एव परिणेतव्यः इति इच्छा स्यात् तर्हि तथैव भवतु। देशस्य हिताहितम् अहं चिन्तयिष्यामि'' इति।

पितुः वचनम् अनङ्गीकुर्वती स्वर्णलता– ''तात! मम अनुरागः तु केवलं मनोमात्रे अस्ति। अतः अहम् अन्यं परिणेष्यामि चेत् न कोऽपि आपत्तिः। देशस्य हितार्थम् अहं मम अनुरागं परित्यजामि। नीहारदेशस्य राजकुमारम् एव परिणेष्यामि अपि'' इति

उक्तवती।

तदा राजा– "वत्से! भवत्याः देशप्रेम अपूर्वम्। पितृवचनपालनबुद्धिः अपि अपूर्वा एव। एतादृशीं भवतीं दैवं न वञ्चयेत् इति विश्वासः अस्ति मम। यस्मिन् भवत्याः अनुरागः तम् एव भवती परिणेतुं यथा शक्नुयात् तथा दैवम् अनुगृह्णीयात् अपि" इति उक्त्वा स्वकार्यार्थं ततः निर्गतवान्।

चित्रारण्ये कूबरः नाम मान्त्रिकः कश्चन आसीत्। सः क्षुद्रदेवतानाम् आराधनतः बह्वीः अमानुषीः शक्तीः सम्पादितवान् आसीत्। समस्तभूलोकस्य सार्वभौमत्वं प्राप्तव्यम् इति तस्य महती इच्छा आसीत्। क्षुद्रदेवताभिः उक्तम् आसीत् यत् स्वर्णलता परिणीता चेत् एतत् अभीष्टं सेत्स्यति इति। 'किन्तु स च परिणयः बलात् न प्रचलेत्, सा मनसा अङ्गीकृत्य भवन्तं परिणयति चेदेव इष्टसिद्धिः' इत्यपि उक्तवत्यः आसन् ताः देवताः। 'यदि परिणयार्थं बलात्कारः क्रियेत तर्हि एतावता भवता सम्पादिताः शक्तयः अपि नष्टाः भविष्यन्ति' इति सूचितवत्यः आसन् ताः क्षुद्रदेवताः।

कदाचित् कूबरः स्वस्य मान्त्रिकशक्तेः साहाय्येन अदृश्यरूपेण स्वर्णलतायाः अन्तःपुरं प्रविष्टवान्। तत्समये स्वर्णलता स्वप्रकोष्ठे हंसतूलिकातल्पे निद्रां कृतवती आसीत्।

तस्याः अपूर्वं सौन्दर्यं समीपतः दृष्ट्वा



आश्चर्यचकितः कूबरः एवं चिन्तितवान् 'सार्वभौमताप्राप्त्यर्थम् एषा परिणेतव्या इति एतावत्पर्यन्तं चिन्तयन् आसम्। इदानीं तु भाति यत् एतस्याः परिणयार्थं सार्वभौमता प्राप्तव्या इति' इति।

प्रातःकाले स्वर्णलता जागरिता अभवत्। तदा कूबरः तस्याः पुरतः प्रत्यक्षः अभवत्। अकस्मात् तं तत्र दृष्ट्वा स्वर्णलता आश्चर्यचकिता भीता च।

तदा कूबरः– "सुन्दरि! अलं भीत्या। अहं भवत्याः शत्रुः न। अहं कमपि अपकारं न करोमि। भवत्याम् अनुरक्तः अहम् अत्र आगतः" इति उक्त्वा स्वस्य इतिवृत्तं विस्तरेण निवेदितवान्।



तदा स्वर्णलता– "राजकुमार्या मया राजकुमारः कश्चन परिणीतः चेदेव वरं खलु? अमानुषशक्तिमन्तं सामान्यं मान्त्रिकं भवन्तम् अहं कदापि न परिणेष्यामि" इति उक्तवती।

एतत् श्रुत्वा कूबरः हसन् उक्तवान्– "मम शक्तिम् अजानती भवती एवं वदति। भवती यत्र इच्छति तत्र नेतुं समर्थः अहम्। बलयुक्ताः राजकुमाराः अपि भवत्याः सेवकाः यथा स्युः तथा कर्तुम् अपि अहं समर्थः। यदि भवती मां परिणयेत् तर्हि सकलसुखानि अपि अनुभोक्तुम् अर्हति। स्वर्गम् एव भवत्याः अधीनं भवेत्। यदि परिणयं भवती निराकुर्यात् तर्हि भवत्याः देशस्य समूलनाशः स्यात्। अतः सम्यक् विचिन्त्य यथोचितम् आचरतु" इति।

मान्त्रिकः यथा उक्तं तथा कर्तुं समर्थः एव इति जानती स्वर्णलता क्षणकालं विचिन्त्य उक्तवती– "मम त्रीन् नियमान् भवान् अङ्गीकरोति चेत् अहं भवन्तं परिणेष्यामि। यदि एतत् अनङ्गीकुर्वन् भवान् देशनाशार्थम् उद्युक्तः भवेत् तर्हि अहम् आत्महत्यया इहलोकव्यापारं समापयिष्यामि। देशस्य नाशं तु अहं कदापि न इच्छामि" इति।

"के ते नियमाः भवत्याः?" इति पृष्टवान् कूबरः।

"अस्माकं देशे मतीयं पक्षद्वयम् अस्ति। उभौ अपि पक्षौ प्रबलौ। एकपक्षीयाः अपरपक्षीयान् मारयन्ति। अतः देशे प्रतिदिनं मतकलहकारणतः जनाः मरणं प्राप्नुवन्तः सन्ति। अतः भवता उभयपक्षयोः नायकेषु अपि परिवर्तनम् आनेतव्यम्। मम पिता एतत् कर्तुं न शक्तवान्" इति प्रथमं नियमम् उक्तवती स्वर्णलता।

"द्वितीयः नियमः कः?" इति पृष्टवान् कूबरः।

"मम पिता देशहितार्थं बह्वीः योजनाः व्यवहारे आनीतवान् अस्ति। योजनायाः कार्यान्वयनार्थं तेन बहवः अधिकारिणः नियोजिताः अपि। किन्तु ते अधिकारिणः अनीतिव्यवहारम् आश्रितवन्तः सन्ति। तेषु अपि परिवर्तनम् आनेतव्यं भवता" इति

द्वितीयं नियमम् उक्तवती स्वर्णलता।

कूबरः यदा एतद्विषये चिन्तयन् आसीत् तदा स्वर्णलता तृतीयं नियमम् उक्तवती– "नीहारदेशस्य युवराजः परमनीचः। सः मां परिणेतुम् इच्छति। यदि अहं तं न परिणयेयं तर्हि सः अस्माकं राज्यम् एव नाशयेत्। अतः एव अहं विदेहराजकुमारे अनुरक्ता अपि तं विस्मर्तुं प्रयत्नं कुर्वती अस्मि। अतः नीहारराजकुमारे सज्जनत्वं यथा स्यात् तथा करणीयम् इति तु तृतीयः नियमः" इति।

तदा कूबरः आश्चर्यचकितः सन्– "भवती चित्रसेने अनुरक्ता खलु? एवं स्थिते, अहं भवत्या उक्तान् सर्वान् नियमान् पालयेयं चेदपि भवती मां मनःपूर्वकं परिणयेत् इत्यत्र कथं विश्वासः?" इति पृष्टवान्।

"देशस्य हितार्थं दुष्टं नीहारराजकुमारम् एव परिणेतुं सिद्धा जाता अहं, मया उक्तानि सत्कार्याणि कृतवन्तं कार्यदक्षं समर्थं भवन्तं न परिणयेयं वा?" इति प्रतिप्रश्नं कृतवती स्वर्णलता।

"अस्तु तर्हि। अहम् इदानीं गच्छामि। मम प्रत्यागमनात् पूर्वम् अन्यः कोऽपि भवतीं परिणेतुं यथा न शक्नुयात् तथा कर्तुम् एतं हारं भवत्याः कण्ठे स्थापयामि। ऋते मत्तः, अन्यः कोऽपि भवतीं स्पृशति चेत् हारः सर्परूपं प्राप्य तं दशति" इति उक्त्वा एकं हारं स्वर्णलतायाः कण्ठे दूरात् क्षिप्तवान्। ततः अदृश्यतां प्राप्य स्वस्य उपासनागृहं



प्रतिगतवान् च।

तत्र सः स्वाधीनाः सर्वाः क्षुद्रदेवताः आहूतवान्। यदा सर्वाः उपस्थिताः तदा सः ताः स्वस्य इच्छां निवेदितवान्। तदा क्षुद्रदेवताः उक्तवत्यः– "एतावत्पर्यन्तं कोऽपि मान्त्रिकः एतादृशीम् इच्छां न प्रकटितवान्। सौभाग्यवशतः भवान् एतादृशीम् इच्छां प्रकटयन् अस्ति। एतदर्थं वयम् अस्मदीयाः सर्वाः शक्तीः अर्पयितुं सिद्धाः। यतः सत्कार्ये शक्तीनां विनियोगेन वयम् एव पवित्राः स्याम। किन्तु अस्माभिः याः शक्तयः दीयन्ते ताः देहबलं जेतुं समर्थाः। मनोबलं जेतुं तु प्रेमदेवतायाः अनुग्रहः सम्पादनीयः। भवतः या अपेक्षा सा मनसः



सम्बन्धिनी इत्यतः प्रेमदेवतायाः अनुग्रहस्य प्राप्तिः अनिवार्या'' इति।

कूबरः प्रेमदेवतायाः अनुग्रहं प्राप्तुं पूजाः आरब्धवान्। तस्य प्रबलपूजाकारणतः कदाचित् प्रेमदेवता प्रत्यक्षीभूय उक्तवती– ''भवति इदानीं स्वार्थभावनाः सन्ति। दुष्टचिन्तनानि अपि सन्ति। दुष्टता स्वार्थभावना च यत्र भवति तत्र अहं न वसामि। अतः भवान् प्रथमम् आत्मपरिवर्तनं करोतु। सर्वेषु जनेषु निर्व्याजप्रीतिं प्रदर्शयतु। तदा अहं भवतः हृदये निश्चयेन वासं करिष्यामि'' इति।

एतत् अङ्गीकृत्य कूबरः जनानां समीपं गतवान्। अहं देवांशसम्भूतः इति जनान् उक्तवान् सः। तेन प्रदर्शितानां महिम्नां कारणतः जनाः आकृष्टाः अभवन्। बहवः तस्य परमभक्ताः अभवन्।

कूबरः बहूनि देशहितकार्याणि अपि कृतवान्। बहूनां व्याधिं दूरीकृतवान् सः। अन्धान् दृष्टियुतान् कृतवान्। दरिद्रेभ्यः धन-कनकादिकं दत्तवान्। निस्साराणि क्षेत्राणि सारयुतानि कृतवान्। स्वार्थभावनां विना तेन कृतानि एतादृशानि कार्याणि जनप्रियानि अभवन्। सर्वे कूबरं देवतापुरुषः इति प्रशंसां कृतवन्तः।

एवं जनप्रियतां जनादरं च प्राप्य सः धर्मप्रचारार्थम् अपि उद्युक्तः अभवत्। सः जनान् बोधितवान्– ''भवतां यस्मिन् मते श्रद्धा तत् मतम् अनुसरन्तु भवन्तः। किन्तु अन्यमतस्य दूषणं निन्दनं वा न करणीयम्। अन्यमतीयाः उपेक्षया द्वेषेण वा न द्रष्टव्याः अपि। वयं सर्वे देशमातुः पुत्राः एव। मतव्याजेन परस्परकलहः सर्वथा अनुचितः। एतादृशम् अन्तःकलहम् अहं द्रष्टुं न शक्नोमि। अतः भवतः नमस्कारपूर्वकं प्रार्थयामि– एतादृशानि कृत्यानि मा कुर्वन्तु कृपया इति। समाजहितनाशकं कार्यं कदापि न करणीयम्'' इति।

एतादृशः उपदेशः व्यर्थः न जातः। क्रमशः जनेषु परिवर्तनं जातम्। देशे मतीयकलहाः न्यूनाः जाताः। गच्छता कालेन तादृशाः कलहाः सर्वथा लुप्ताः अभवन् अपि।

कूबरविषयिणी भक्तिः सर्वत्र प्रसृता। पापभीताः अनीतिमार्गाश्रयिणः राजोद्योगिनः कूबरम् आगत्य पापकृत्यानि निवेद्य क्षमां प्रार्थितवन्तः। कूबरः तान् क्षमादानेन अनुगृह्य इतः परम् एतादृशं कार्यं न करणीयम् इति बोधयित्वा प्रेषितवान्। तेन तादृशाः सर्वे सज्जनाः जाताः।

एवम् अवन्तिदेशे समग्रपरिवर्तनं कृत्वा कूबरः विदेशेषु अपि सञ्चारं कृतवान्। यत्र यत्र सः गतः तत्र सर्वत्र पापकृत्यानि लुप्तानि अभवन्। प्रेमभावश्च प्रसृतः। सर्वे तस्य आराधकाः जाताः। नीहारराज्यस्य राजकुमारः अपि कूबरस्य सात्त्विकप्रभावेण आकृष्टः सन् मनःपरिवर्तनं प्राप्य कूबरभक्तः सन् सज्जनः जातः।

निश्चितकालात् पूर्वम् एव कार्यं समाप्य कूबरः स्वर्णलतायाः समीपम् आगतवान्। कूबरेण यद्यत् कृतं तत्सर्वं स्वर्णलतया ज्ञातम् आसीत् एव। अतः सा कूबरं साष्टाङ्गं प्रणम्य उक्तवती– "आर्य! भवान् केवलमान्त्रिकः न, अपि तु प्रत्यक्षदेवता एव। मानवमात्रेण यत् साधयितुं न शक्यते तत् अल्पेन एव कालेन साधितं भवता। मदर्थम् एव एतत्सर्वं भवता कृतम्। अतः नितरां प्रीता अस्मि अहम्। यदि भवान् मां परिणयेत् तर्हि अहम् अनुगृहीता भवेयम्" इति।

तदा कूबरः हसन्– "भवतीं परिणेतुं न, भवत्या कण्ठे मया स्थापितम् अपायकारकं



हारम् अपनेतुम् आगतः अस्मि अहम्, येन भवती विवाहविषये स्वतन्त्रा स्यात्" इति उक्तवान्।

"एवं तर्हि मयि प्रीतिः नास्ति वा भवतः?" इति आश्चर्येण पृष्टवती स्वर्णलता।

तदा कूबरः गाम्भीर्येण– "प्रीतिः अस्ति एव। किन्तु सा पुत्रीप्रीतिः। सर्वाः प्रजाः इदानीं मम पुत्रतुल्याः। इदानीम् अहं प्रेममूर्तिः सन् पुनर्जन्म प्राप्तवान् अस्मि। प्रेमदेवता मम हृदये अस्ति। अतः प्रेमदेव्याः अपचारः यथा न स्यात् तथा व्यवहारः मम धर्मः" इति उक्त्वा स्वर्णलतायाः कण्ठे स्थितं हारम् अपनीय ततः निर्गतवान्।

वेतालः एवं कथां समाप्य अवदत्–

"राजन्! सार्वभौमता प्राप्तव्या इति उद्देशेन खलु कूबरेण प्रयत्नः आरब्धः? किन्तु तादृशः अवकाशः यदा लब्धः तदा किमर्थं सः प्रयत्नात् विमुखः जातः? अहं देवांशसम्भूतः इति कथयतः तस्य वचनं किम् उचितम्? डम्भाचारवचनं खलु एतत्? स्वर्णलतया सूचितान् नियमान् पालयितुं किल सः देशहितकार्येषु उद्युक्तः अभवत्? प्रेमभावना सर्वसोदरभावना इत्यादयः तस्य हृदयतः आगताः इति भावयति वा भवान्? स्वार्थस्य कस्यचित् साधनार्थं प्रकटिताः भावनाः खलु ताः? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "कूबरः यदा मान्त्रिकमात्रम् आसीत् तदा सः स्वार्थी आसीत्। क्षुद्रदेवतानाम् आराधनं करोति स्म अपि। किन्तु स्वर्णलतायाः विषये स्थितस्य अनुरागस्य कारणतः सः प्रेमदेवतायाः आराधकः अभवत्। तदा दुष्टाः शक्तयः ततः अपगताः। सच्छक्तयः तस्मिन् आगताः। अज्ञानाहङ्कारादयः ततः गताः। तस्य सच्छक्तिः तावत् प्रवृद्धा यत् तस्य हृदये प्रेमदेवता निवासम् अपि अकरोत्। अतः 'अहं देवांशसम्भूतः' इति सः यत् उक्तवान् तत् अनुचितं न। भूतदया, शान्तिः इत्यादयः सामान्येन उक्ताः चेत् सः दम्भाचारवान् भवेत्। किन्तु यः प्रेममूर्तिः तस्य व्यवहारः दम्भाचारयुक्तः न स्यात् खलु? एवं तस्मिन् महत् परिवर्तनं जातम् इत्यतः सः सार्वभौमत्वप्राप्तीच्छां परित्यक्तवान्, स्वर्णलतायाः परिणयस्य इच्छाम् अपि परित्यक्तवान्। एवं परिणयेच्छया सद्व्यवहारे प्रवृत्तः अपि कूबरः कालान्तरे महात्मा जातः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






**अस्मद्देशीया पशुपक्षिसम्पत् –**

# कृष्णहरिणाः

अस्माकं देशे चतुर्विधाः हरिणाः दृश्यन्ते। ते च चिङ्काराहरिणाः, कृष्णवर्णीयाः 'ब्लाक् बक्'नामकाः हरिणाः, चतुर्भिः शृङ्गैः युक्ताः चौसिङ्घानामकाः हरिणाः, नीलवर्णयुक्ताः 'नीलगाय्'नामकाः हरिणाः च। एतेषु हरिणेषु कृष्णहरिणाः तावत् सुन्दरतमाः। एतज्जातीयानां हरिणानां शरीरं श्वेत-कृष्णकालकैः युक्तं सत् रमणीयं दृश्यते। हरिणानां वलयितं शृङ्गं तु द्रष्टॄन् नितराम् आकर्षति। एतेषां सामान्यम् औन्नत्यं ८० सें.मी. स्यात्। भारः च ४० किलो भवेत्। एतेषां दृष्टिशक्तिः नितरां तीक्ष्णा। घ्राणशक्तिः श्रवणशक्तिः च तावती तीक्ष्णा न भवति।

पूर्वं समग्रे भारते ये दृश्यन्ते स्म, ते हरिणाः इदानीं केवलं गुजरातराज्ये, राजस्थानराज्ये, पञ्जाबराज्ये च दृश्यन्ते। दक्षिणभारते 'गिण्डीराष्ट्रियमृगालये' एते द्रष्टुं शक्याः। १९२४ तमे वर्षे मद्रास्गवर्नर् एतान् हरिणान् अत्रव्यं मृगालयं प्रति आनीतवान् आसीत्। पशुषु हरिणानां धावनं सुप्रसिद्धम्। तत्रापि पादौ उन्नीय वेगवशात् वायौ सञ्चरताम् इव धावताम् तेषां सौन्दर्यं तु वर्णनातीतम्।

# कथाकथनपटुः दीपकः

मद्रासनगरीया काचित् प्रसिद्धा पत्रिका एषु दिनेषु कथाकथनस्पर्धाम् आयोजितवती आसीत्। एतस्यां स्पर्धायां शताधिकाः बालाः भागं गृहीतवन्तः आसन्। प्रथमचक्रे ५० बालाः चिताः अभवन्। तेषु १३ बालाः कथाकथने कथारचनायां च समर्थाः इति निर्णीताः। तेभ्यः सर्वेभ्यः पुरस्काराः दत्ताः च। एवं पुरस्कारं प्राप्तवत्सु पञ्चवर्षीयः दीपकश्रीनिवासन् अन्यतमः।



दीपकः विकलाङ्गः अपि, यश्च जन्मजातस्य शरीरदोषस्य कारणतः सम्यक् वक्तुं न शक्नोति, सम्यक् हस्तं चालयितुम् अपि न शक्नोति। (एतादृशाः बालाः 'स्पास्टिक्स् चैल्ड्स्' इति उच्यन्ते।)

एवं विकलाङ्गतायाः कारणतः दीपकः कथने कष्टं तु अनुभवति स्म, तथापि स्पर्धायां सः बीरबल-तेन्नालीरामादीनां कथां तथा उत्साहेन उक्तवान्, येन च निर्णायकाः नितरां सन्तुष्टाः सन्तः तं पुरस्कारार्हं निर्णीतवन्तः।

'स्पास्टिक्स् सोसैटी आफ् इण्डिया' नामिकया संस्थया सञ्चाल्यमाने शिक्षाकेन्द्रे दीपकः पठति। एवं हि श्रूयते यत् तस्मिन् विद्यालये दीपकः एव सुनिपुणः इति। दीपकः प्रतिदिनं नियतरूपेण विद्यालयं गच्छति। विद्याभ्याससमये एषः आत्मन असामर्थ्यं स्मरन् खिन्नः न भवति। सदा हसन्मुखता एतस्य वैशिष्ट्यम्।

गृहे उपविश्य दूरदर्शनस्य कार्यक्रमाणां दर्शने दीपकस्य विशेषासक्तिः। तत्रापि चलनचित्रगीतानि तस्मै नितरां रोचन्ते। प्रतिसप्ताहं दूरदर्शनेन प्रसार्यमाणः 'वर्ल्ड् दिस् वीक्'नामकः विशेषकार्यक्रमः अपि दीपकस्य प्रियतमः एव। दीपकस्य स्मरणशक्तिः तावती तीक्ष्णा यत् मासात्पूर्वं दृष्टां दूरदर्शनवार्तां सः विना लोपं पुनः वक्तुं शक्नोति।

एतावदेव न, गृहम् आगच्छतां सर्वेषाम् अतिथीनां नाम, सङ्केतं, दूरवाणीसङ्ख्यां च चिरकालं स्मरन् एषः लीलया पुनः वदति। क्रिकेट्, टेन्नीस्, फूट्बाल् इत्यादयः क्रीडाः एतस्मै विशेषतः रोचन्ते। कपिलदेवः एतस्य प्रियतमः क्रीडापटुः। अन्यबालकानाम् इव एतस्य अपि चाकलेहः, केक्स्, पयोहिमम्(ऐस् क्रीम्) इत्यादयः परमप्रियाः।

दीपकः इदानीं कर्णाटकसङ्गीतस्य अभ्यासं कुर्वन् अस्ति। एषः अभ्यासः तस्य वाक्शक्तिं वर्धयेत् इति भाव्यते। तेजस्वी एषः स्वहस्तेन किमपि लेखितुं न शक्नोति इति तु महत् दौर्भाग्यम्। यदि एषः लेखितुं समर्थः स्यात् तर्हि बह्वीः उत्तमाः कथाः लिखित्वा पत्रिकाभ्यः प्रेषयन् प्रसिद्धः अभविष्यत्।

# भवन्तः जानन्ति वा?

१. सर्वप्रथमः 'साहित्यकारसमावेशः' कस्मिन् नगरे प्रवृत्तः?
२. सर्वप्रथमं हिन्दीभाषया रामायणं कः रचितवान्?
३. कलकत्तानगरे स्थितस्य 'सस्यशास्त्रोद्यानस्य' (बोटानिकल् गार्डन्स्) का विशषता?
४. फारसीककथायाम् एवं हि श्रूयते यत् कौचित् पिता-पुत्रौ परस्परयुद्धं कृतवन्तौ, परस्परावगमात् पूर्वं मरणं प्राप्तवन्तौ च इति। तौ कौ?
५. नवम्याः लोकसभायाः निर्वाचनस्य किञ्चन वैशिष्ट्यम् अस्ति। तत् किम्?
६. जवहरलालनेहरूवर्यः कांग्रेस्संस्थायाः अध्यक्षपदं कतिवारं स्वीकृत्य निरूढवान्?
७. आंग्लाक्षराणि २६ सन्ति। द्वयोः युरोपीयभाषयोः अपि एषा एव स्थितिः। ते भाषे के?
८. सिंहलीयः कश्चन वीरः भारतम् आगत्य रामनाडचोलजनान् पराजित्य मदुरै-पाण्ड्यराजं सिंहासने उपवेशितवान्। सः वीरः कः?
९. देहलीनगरीयः कश्चन राजा 'पोलो'क्रीडां क्रीडन् एव प्राणान् अत्यजत्। सः कः?
१०. तस्य अश्वस्य नाम किं, यस्मिन् राजा रणजितसिंहः विशेषप्रीतिमान् आसीत्।
११. यथा गङ्गायमुनयोः कुम्भमेलेन सह सम्बन्धः अस्ति तथा अन्यासां तिसृणां नदीनाम् अपि सम्बन्धः अस्ति। ताः नद्यः काः?
१२. तौ सिक्खगुरू कौ, ययोः च जन्मदिनं महता वैभवेन आचर्यते?
१३. वृषभयुद्धे (बुल् फायिट्) यः विजयं प्राप्नोति सः कीदृशं श्रेष्ठं पारितोषिकं प्राप्नोति?
१४. बेङ्गलूरुनगरे स्थितस्य शाश्वतीवस्तुसङ्ग्रहालयस्य किं वैशिष्ट्यम्?
१५. भारतस्य सर्वप्रथमः 'अर्क् बिषप्' कः?

## उत्तराणि

१. मधुरैनगरे। तस्य च नाम 'तमिळसङ्घः' इति।
२. तुलसीदासः। नाम 'रामचरितमानसम्' इति।
३. एशियाखण्डे एतत् एव सुविशालम्।
४. रुस्तुम्-शोहराब् चेति।
५. मतदातॄणां वयः १८ स्यात् इति निश्चितम्। कस्यापि पक्षस्य बहुमतं नास्तीत्यतः तात्कालिकः सर्वकारः रचितः।
६. सप्तवारम्।
७. जर्मन्भाषा, डच्भाषा च।
८. पराक्रमाबाहुः।
९. कुतुबुद्दीन् ऐबक्।
१०. लैली इति।
११. नर्मदा, कावेरी, गोदावरी च।
१२. गुरुनानकदेवः, गुरुगोविन्दसिंहः च।
१३. वृषभस्य कर्णौ, पुच्छं च।
१४. भारते स्त्रीणां निमित्तं निर्मितः प्रथमः वस्तुसङ्ग्रहालयः।
१५. बिषप् जुवान् डी अलबूक्वेर्क्।

# र स वा र्ता:

## मूल्याङ्कस्य अत्यधिकं मूल्यम्

विरलतया प्राप्यमाणानां मूल्याङ्कानां मूल्यं कदाचित् अत्यधिकं भवति। इंग्लेण्ड्देशीयस्य सम्राजः सप्तमएड्वर्ड्वर्यस्य मुखस्य चित्रेण युक्तः मूल्याङ्कः (१९०४ तमे वर्षे मुद्रितः) एषु दिनेषु ५६,००० अमेरिकाडालर्मूल्येन विक्रीतः अभवत्। एतस्मिन् शतके अत्यधिकमूल्येन विक्रीतः मूल्याङ्कः एषः एव। एतं स्विजर्ल्याण्ड्देशीयः मूल्याङ्कप्रेमी कश्चित् क्रीतवान्।







## दीर्घजीवी विद्युद्दीपः

बहूनां वर्षाणां संशोधनस्य अनन्तरं क्यालिफोर्नियासंस्था काचित् तादृशस्य विद्युद्दीपस्य अन्वेषणम् अकरोत्, यश्च २०,००० घण्टाः यावत् ज्वलेत्। एतस्य नाम 'इलेक्ट्रानिक् लैट्' इति, 'ई-ल्याम्प्' इति वा। प्रतिदिनं घण्टात्रयं यावत् ज्वाल्यते चेत् एषः १८ वर्षाणि यावत् जीवेत् इति सम्भाव्यते।

## सुयेजकुल्या गभीरा भविष्यति

भूमध्यसागरस्य रक्तसागरस्य मध्ये सम्बन्धकल्पयित्री सुयेजकुल्या १८ मीटर् गभीरा अस्ति। एषा गभीरता २२ मीटर् मिता करणीया इति उद्देशेन कार्यम् आरब्धम् अस्ति। एतस्य परिणामतः काश्चन महानौकाः आफ्रिकातटस्य परिक्रमणम् अकृत्वा एव एतेन मार्गेण अग्रे गन्तुम् अर्हति। एवं हि चिन्त्यते यत् एतस्य फलतः १०% वाणिज्यनौकाः लाभं प्राप्नुयुः इति।





# उदारमनस्कः

रत्नपुरनामके ग्रामे कश्चन विद्यालयः आसीत्। तं विद्यालयं प्रति अध्यापकत्वेन सुदर्शनः नाम कश्चित् आगतवान्। सः एतस्य ग्रामस्य विषये, ग्रामस्थानां विषये वा किमपि न जानाति स्म। ग्रामम् आगतः सः साक्षात् भूस्वामिनः गृहं गत्वा स्वपरिचयम् उक्त्वा आगमनकारणं निवेदितवान्। भूस्वामी तत्क्षणे एव सुदर्शनस्य वासार्थं गृहादीनां व्यवस्थां कृतवान्। अल्पपरिचयतः एव सुदर्शनः ज्ञातवान् यत् भूस्वामी मितभाषी गम्भीरः च इति।

सुदर्शनस्य आगमनस्य अनन्तरं सप्ताहाभ्यन्तरे गणेशचतुर्थीपर्व आगतम्। पर्वणः पूर्वदिने आकाशे अकस्मात् कृष्णमेघाः सम्मिलिताः। धाराकारेण वृष्टिः आगता च। अतः समग्रे ग्रामे जलं स्थितं दृश्यते स्म।

मार्गपार्श्वे गणेशविग्रहाणां फलपुष्पादीनां च विक्रेतारः उपविष्टाः आसन्। ते शैत्यवशात् कम्पन्ते स्म। तदा तदा वृष्टिं निन्दन्ति स्म अपि। वृष्टिपरिणामतः ग्राहकाः विरलतया एव दृश्यन्ते स्म। अतः विक्रेतॄणां मुखे चिन्तारेखा स्फुटं दृश्यते स्म।

गणेशपूजायाः निमित्तं पूजासामग्रीः क्रेतुं सुदर्शनः अपि गृहात् निर्गतवान्। विपण्यां विविधवयस्काः विक्रेतारः विक्रयणे मग्नाः आसन्। भूस्वामी प्रत्यापणं गत्वा मूल्यं विचार्य मूल्यविषये चर्चां करोति स्म।

भूस्वामी एकस्य बालकस्य विक्रेतुः समीपं गत्वा मूल्यविषये चर्चां कृत्वा मूल्यं न्यूनीकारितवान्। अन्येषां विक्रेतॄणां समीपं गत्वा अपि तथैव कृतवान् सः। 'अहो भूस्वामिनः कृपणता। विक्रेतारः वृष्टिकारणतः चिन्ताक्रान्ताः सन्ति एव। तन्मध्ये भूस्वामी मूल्यविषये चर्चां कुर्वन्



न्यूनमूल्येन ददातु इति वदन् अस्ति। निष्करुणः एषः' इति चिन्तितवान् सुदर्शनः।

सर्वत्र मूल्यविषये चर्चां कृत्वा सर्वेभ्यः आपणेभ्यः अधिकांशानि वस्तूनि क्रीतवान् भूस्वामी। भूस्वामिनः सेवकाः तानि वस्तूनि ततः नीतवन्तः।

'एतावन्ति फलपुष्पादीनि पूजासामग्रीः च क्रीत्वा भूस्वामी किं वा कुर्यात्? सेवकद्वारा अधिकमूल्येन एतेषां विक्रयणं कारयेत् सः' इति चिन्तितवान् सः।

तस्मिन् एव समये सुदर्शनस्य सहोद्योगी कश्चित् पूजासामग्रीः क्रेतुं तत्र आगतवान्। सुदर्शनः आत्मना यत् दृष्टं तत् निवेदितवान्। उक्तवान् च– "भूस्वामितः भीताः एते निर्धनाः विक्रेतारः अल्पमूल्येन वस्तूनि विक्रीतवन्तः इति भाति मम। भूस्वामी एतेषां विषये क्रूरतां प्रदर्शितवान् इव। शैत्येन कम्पमानाः एते उदरम्भरणार्थं वाणिज्ये उद्युक्ताः सन्ति। किन्तु भूस्वामी अत्यल्पमूल्येन एतेभ्यः वस्तूनि क्रीणन् अल्पत्वं प्रदर्शितवान्। भूस्वामी मूल्यविषये चर्चां कुर्वन् आसीत् यत् तत् अहं प्रत्यक्षं दृष्टवान् अस्मि" इति।

सुदर्शनस्य वचनानि श्रुतवतः सहोद्योगिनः खेदः जातः। सः खेदेन उक्तवान्– "भवान् भूस्वामिविषये एतादृशानि अपमानकराणि वचनानि मा वदतु। सः एतस्य ग्रामस्य देवता इव। भवान् नूतनः इत्यतः एतत् प्रायः न जानाति" इति।

"एवं वा? किन्तु मम तु आश्चर्यं नाम देवतातुल्यः सन् भूस्वामी अत्यल्पमूल्येन वस्तूनि क्रेतुं किमर्थं प्रयतमानः अस्ति इति" इति उपहासमिश्रितेन स्वरेण उक्तवान् सुदर्शनः।

सहोद्योगी प्रतिवचनं किमपि न उक्तवान्। क्षणकालस्य मौनस्य अनन्तरम्– "आगच्छतु मित्र! भूस्वामिगृहं गत्वा आगच्छाम तावत्" इति उक्त्वा भूस्वामिगृहं प्रति प्रस्थितवान्। सुदर्शनः तम् अनुसृतवान्।

यदा तौ भूस्वामिगृहं प्राप्तवन्तौ तदा भूस्वामी सेवकद्वारा पूजासामग्रीः एकत्र स्थापयन् आसीत्। यदा एतौ द्वारसमीपम्

आगतवन्तौ तदा सः महता आदरेण– "स्वागतं भवतोः। भवतोः आगमनात् नितरां सन्तुष्टः अस्मि। भवन्तौ वृष्ट्या क्लिन्नौ इव भासेते किल" इति उक्त्वा सेवकद्वारा नूतनानि वस्त्राणि आनाय्य एतयोः कृते यच्छन् उक्तवान्– "शिरः प्रथमं मार्जयताम्। ततः नूतनानि वस्त्राणि धरताम्" इति।

सुदर्शनः आश्चर्यम् अनुभवन् सहोद्योगिना सह पार्श्वस्थं प्रकोष्ठं गत्वा नूतनानि वस्त्राणि धृतवान्। यदा तौ ततः बहिः आगतवन्तौ तदा भूस्वामी पानार्थम् उष्णमधुरं क्षीरं दत्तवान्।

भूस्वामिनः औदार्यं दृष्ट्वा आश्चर्यचकितः सुदर्शनः भूस्वामिनम् उक्तवान्– "श्रीमन्! यदि भवान् अन्यथा न चिन्तयेत् तर्हि अहं मम अल्पं सन्देहं भवतः पुरतः प्रकटयेयम्" इति।

"अन्यथा चिन्तनं किमर्थम्? मनसि विद्यमानं सन्देहं निस्सङ्कोचं प्रकटयतु तावत्" इति उक्तवान् भूस्वामी।

तदा सुदर्शनः विपण्यां पूजासामग्रीणां फलपुष्पादीनां च विक्रेतृभिः सह भूस्वामिना कृतां मूल्यविषयिकां चर्चां स्मारयित्वा उक्तवान्– "विपण्यां तु अहम् अल्पमूल्येन वस्तूनि क्रेतुं प्रयतमानं भवन्तं दृष्टवान्। अत्र तु ततः सर्वथा भिन्नं भवन्तं पश्यामि। अतः भवतः व्यवहारे सङ्गतिं द्रष्टुं न शक्नोमि अहम्। कोपम् अकृत्वा एतस्य कारणं वक्तव्यं



कृपया" इति।

तदा भूस्वामी उच्चैः हसितवान्, पृष्टवान् च– "कष्टसन्दर्भे कश्चित् अन्यस्य साहाय्यं यत् करोति तत् अनुचितम् इति भावयति वा भवान्?" इति।

"कष्टसन्दर्भे साहाय्यदानं प्रशंसार्हम् एव। किन्तु अल्पेन मूल्येन वस्तूनां क्रयणं तु न शोभते" इति उक्तवान् सुदर्शनः।

"पश्यतु मित्र! वृष्टिकारणतः महत् कष्टम् अनुभूय ते फलपुष्पादिकं विक्रयणार्थम् आनीतवन्तः आसन्। किन्तु विक्रयणं तु न जातम् आसीत्। अतः तेषां समीपे विद्यमानानि वस्तूनि क्रीतानि मया। इतः परं निर्धनेभ्यः प्रतिवेशिभ्यः कर्मकरेभ्यः च

वितीर्यन्ते एते" इति उक्तवान् भूस्वामी।

"विक्रेतृभ्यः भवान् वस्तूनि क्रीतवान् यत् तत् तु भवतः महत् औदार्यं निरूपयति। किन्तु भवान् बालविक्रेतृणां समीपे अपि मूल्यविषये चर्चां करोति स्म। एतस्य किम् औचित्यम्? यदि साहाय्यं करणीयम् इति इच्छा स्यात् तर्हि किञ्चित् धनं दातुं शक्नुयात् खलु भवान्?" इति उक्तवान् सुदर्शनः।

तदा भूस्वामी अनङ्गीकारपूर्वकं शिरः चालयन् उक्तवान्– "मित्र! साहाय्यव्याजेन अहं कस्यापि स्वभावं दूषयितुं न इच्छामि। भवान् अत्र नूतनः। अतः अहं मम आशयं किञ्चित् विस्तरेण एव निरूपयामि तावत्। गणेशचतुर्थीसन्दर्भे अस्माकं ग्रामे प्रायः वृष्टिः प्रतिवर्षं भवति एव। तथापि अत्र फलपुष्पादिविक्रेतारः एवं धैर्यं प्राप्नुवन्ति यत् यदि वृष्टिकारणतः फलपुष्पादीनां विक्रयणं न भवेत् तर्हि भूस्वामी वा तानि क्रीणन् साहाय्यं करोति एव इति। एवं मम व्यवहारः तान् वाणिज्ये प्रेरयति। यदि अहं तेभ्यः एवम् एव धनं दद्यां तर्हि ते सर्वे अलसाः भवेयुः। 'वाणिज्ये प्रेरयितुं वस्तूनां क्रयणं तु भवतु। अल्पमूल्येन क्रयणार्थं प्रयत्नः किमर्थम्?' इति प्रश्नः भवतः मनसि स्यात् कदाचित्। वस्तुतः तु प्रतिदिनं ते येन मूल्येन विक्रयणं कुर्वन्ति तेनैव मूल्येन अहं क्रीणामि, न तु ततोऽपि न्यूनेन मूल्येन। यदा वृष्ट्यादिकं भवति तदा नष्टसम्भावनया सर्वे विक्रेतारः मूल्यं वर्धयन्ति। मम ग्रामे तु अहं क्रीणामि एव इत्यतः हानिसम्भावना नास्ति एव। अतः 'मूल्यम् अधिकीकृत्य मा वदतु' इति वदन् अहं योग्येन मूल्येन क्रीणामि। एतेन अन्ये ग्रामीणाः अपि योग्येन एव मूल्येन वस्तूनि प्राप्तुम् अर्हन्ति" इति।

भूस्वामिनः अन्तरङ्गं जानन् सुदर्शनः– "परमोदारः भवान्" इति कृतज्ञतापूर्वकम् उक्तवान्।

"किं मम औदार्यम्? सर्वस्य कारयिता भगवान् एव। अहं तु निमित्तमात्रम्" इति विनयेन उक्तवान् भूस्वामी।





# भगवद्भक्तः

रहीमः नाम कश्चन पूर्वम् आसीत्। तस्य महती सम्पत्तिः आसीत्। रहीमः यथा धनिकः तथैव महान् दैवभक्तः अपि। अतः प्रतिदिनं सः पञ्चवारं भगवद्ध्यानं करोति, प्रतिदिनं धर्मग्रन्थं पठति अपि। सदा तस्य मुखे धर्मग्रन्थवचनानि विलसन्ति स्म।

रहीमस्य एकमात्रपुत्री रजिया। सा अपूर्वसुन्दरी। यदा सा प्राप्तवयस्का जाता तदा उन्नतकुले जाताः बहवः तरुणाः तां परिणेतुं सिद्धाः अभवन्। किन्तु एवम् आगतेषु युवकेषु एकः अपि रहीमाय न अरोचत।

पत्युः व्यवहारं दृष्ट्वा असन्तोषं प्राप्य कदाचित् रहीमस्य पत्नी उक्तवती– "आवयोः पुत्रीं परिणेतुम् उत्सुकेषु बहवः उच्चकुले जाताः एव आसन्। किन्तु तेषु कोऽपि भवते किमर्थं न अरोचत इति तु न जाने अहम्। एवम् एव प्रचलिष्यति चेत् पुत्र्याः विवाहः कदा प्रचलेत्? विवाहमङ्गलस्य दर्शनसौभाग्यं मम नेत्रयोः अस्ति वा न वा इति सन्देहः मम" इति।

एवं वदन्त्याः तस्याः नेत्राभ्याम् अश्रूणि आगतानि। तदा रहीमः तां सान्त्वयित्वा– "अये मन्दबुद्धे! किं रोदनेन? अस्माकं प्रभूता सम्पत्तिः अस्ति एव। अतः आवयोः पुत्रीं यः परिणेष्यति सः धनिककुले जातः एव स्यात् इति न नियमः। किन्तु सः प्रामाणिकः स्यात्, दैवभक्तः चापि स्यात् इति मम इच्छा। तादृशस्य अन्वेषणं कुर्वन् अस्मि एव अहम्। भगवतः इच्छा यदि स्यात् तर्हि अचिरात् एव रजियायाः विवाहः प्रचलेत्। अतः चिन्ता मास्तु भवत्याः" इति उक्तवान्।

तस्मिन् एव समये नासिरः नाम कश्चन निर्धनः तरुणः, चौर्यार्थं तद् गृहं प्रविष्टवान् आसीत्। सः रहसि तिष्ठन् रहीमस्य

"अरबदेशीया जानपदकथा"



तत्पत्न्याः च वचनानि श्रुतवान् आसीत्। तस्य मनसि तदा विविधाः विचाराः आगताः। मुखे मन्दहासः अपि विलसितः।

अनन्तरदिने रहीमः यावत् प्रार्थनामन्दिरं गतवान् ततः पूर्वम् एव नासिरः तत्र उपस्थाय ध्यानवाक्यानि पठन् आसीत्। ततः कानिचन दिनानि यावत् नासिरः प्रार्थनामन्दिरे एव निवसन् ध्यानवाक्यानि श्रद्धया पठितवान्। एतत् सर्वं परिशील्य कदाचित् रहीमः तं पृष्टवान्– "वत्स! कः भवान्? दशभ्यः दिनेभ्यः अहं भवन्तम् अत्रैव पश्यन् अस्मि। कुतः आगतः भवान्?" इति।

मम उपायः फलितः इति भावयन् नासिरः उक्तवान्– "श्रीमन्! अहं कश्चन मन्दभाग्यः। मातापितरौ बान्धवाः वा मम न सन्ति। एवं स्थिते गृहं कुत्र? यत्र वसामि तदेव मम गृहम्। भगवतः नाम स्मरन् दिनानि यापयन् अस्मि" इति।

"एवं चेत् बुभुक्षानिवारणं कथम्?" इति पृष्टवान् रहीमः।

"भगवतः नाम यदा स्मरन् भवामि तदा मां बुभुक्षापिपासादयः न बाधन्ते। तदितरसमये यदा बुभुक्षा अनुभूयते तदा अपि न काऽपि चिन्ता। कोऽपि भगवद्भक्तः कमपि आहारं प्रेषयति। सर्वं भगवतः कृपा" इति कृतकभक्तिं प्रदर्शयन् उक्तवान् नासिरः।

चोरस्य नासिरस्य वचनानि श्रुत्वा सरलः रहीमः तस्मिन् विश्वसितवान्। 'अहो एतस्य भगवति श्रद्धा! अल्पे एव वयसि एतादृशी भक्तिः! एषः तरुणः सुन्दरः दृढकायः च। मया अपेक्षिताः गुणाः सर्वे एतस्मिन् सन्ति। मम पुत्र्याः निमित्तं योग्यः वरः एषः। अतः एतं जामातरं करिष्यामि अहम्' इति निश्चितवान् रहीमः। अतः तस्मात् दिनतः आरभ्य प्रतिदिनं नासिरस्य निमित्तं स्वगृहतः आहारवस्तूनि प्रेषितवान् सः।

एवम् एव चत्वारिंशत् दिनानि अतीतानि। एतावता कालेन सः चोरः नासिरः वस्तुतः अपि भगवद्भक्तः जातः आसीत्। सदा भगवतः ध्यानं करोति स्म सः। मुखे सदा भगवन्नाम। धर्मग्रन्थस्य अर्थस्य चिन्तने सदा तदीयं मनः व्यग्रं भवति स्म। तत्त्वचिन्तनं

यदा प्रवर्तते तदा एषः आसक्त्या तत्र उपविशति स्म। एवं चोरे महत् परिवर्तनं जातम्। पूर्वं चौर्यादिकम् अनुचितकार्यं यत् कृतं तत् स्मरन् सः पश्चात्तापम् अनुभवति स्म। पश्चात्तापकारणतः तस्य नेत्राभ्याम् अश्रूणि आगच्छन्ति स्म।

कदाचित् रहीमः नासिरम् उक्तवान्— "वत्स! भवन्तं यदा यदा पश्यामि तदा सर्वदा महान्तं सन्तोषं प्राप्नोमि। भवादृशः भगवद्भक्तः एव मम जामाता स्यात् इति मम इच्छा। अतः कृपया मम पुत्रीं परिणीय मां तोषयतु" इति।

एतत् श्रुत्वा नासिरः झटिति रहीमस्य पादौ गृहीत्वा अश्रूणि स्रावयन् उक्तवान्— "श्रीमन्! क्षन्तव्यः अहम्। अहं कश्चन चोरः। पूर्वं चौर्यार्थं भवतः गृहं प्रविष्टवान् आसम्। तदा अहं भवतः भवत्पत्न्याः च सम्भाषणं श्रुतवान्। भवतः पुत्री परिणेतव्या इति दुराशा मयि उत्पन्ना। भवतः मनः आक्रष्टुम् अहम् अत्र आगत्य मिथ्याभक्तिम् अभिनीतवान्। किन्तु दिनेषु गतेषु, मयि परिवर्तनं जातम्। पूर्वं मया यानि कृत्यानि कृतानि, तद्विषये पश्चात्तापम् अनुभवन् अस्मि अहम्। अग्रे परिश्रमेण जीवनं यापनीयम् इति निश्चितवान् अस्मि। भवन्तं वञ्चयितुम् उद्युक्तः अहं भवतः पुत्र्याः निमित्तं योग्यः वरः न। अतः अन्यस्य योग्यस्य वरस्य अन्वेषणं करोतु भवान्। यत् उचितं तेन दण्डेन मां दण्डयतु अपि" इति।

एतानि वचनानि श्रुत्वा आश्चर्यं सन्तोषं च अनुभवन् रहीमः प्रीत्या तम् उत्थाप्य— "वत्स नासिर! अज्ञानात् भवता पापानि आचरितानि स्युः। किन्तु पश्चात्तापेन तानि क्षालितानि अभवन्। इदानीं परिशुद्धं रत्नं भवान्। भगवता एव भवान् मत्समीपं प्रेषितः। भवान् एव मम जामाता" इति उक्तवान्।

ततः अल्पे एव काले रजिया-नासिरयोः विवाहः सवैभवं सम्पन्नः। नासिरः रहीमस्य योग्यः जामाता सन् कीर्तिं प्राप्तवान्।



# व्यवहारकौशलम्

विशालपुरनामके विशालग्रामे प्रमोदः नाम कश्चित् नूतनतया पादरक्षापणम् आरब्धवान्। आपणं प्रति बहवः कुतूहलेन आगच्छन्ति स्म। किन्तु पादरक्षाविक्रयणं तु अधिकं न भवति स्म। अतः प्रमोदस्य चिन्ता– कथं वाणिज्यस्य अभिवृद्धिः करणीया इति।

कदाचित् आपणं प्रति कश्चन ग्राहकः आगतः। सः पादरक्षाः दृष्ट्वा एकं युगलम् इष्टवान् अपि। यदा सः तत् धृतवान् तदा अनुभूतवान् यत् पादस्य आकारस्य अपेक्षया पादरक्षयोः आकारः किञ्चिदिव अल्पः इति। अतः सः पादरक्षास्वीकरणविचारं परित्यज्य ततः गन्तुम् उद्युक्तः। तदा प्रमोदः उक्तवान्– "श्रीमन्! एते पादरक्षे नूतने। अतः भवतः एतादृशः अनुभवः। एते धृत्वा भवान् द्वित्राणि दिनानि सञ्चरतु। तदा एते भवतः पादयोः अनुकूले भवतः। क्रयणसमये इतोऽपि विशाले क्रीते चेत् अनन्तरदिनेषु ते अनानुकूल्यं जनयतः" इति।

तदा सः ग्राहकः तत् पादरक्षायुगलं क्रीत्वा ततः निर्गतवान्।

अनन्तरदिने अन्यः कश्चित् पुत्रेण सह आपणम् आगतः। पुत्रस्य निमित्तं सः पादरक्षायुगलं क्रेतुम् इच्छति स्म। पादरक्षे, धृत्वा परीक्ष्य सः उक्तवान्– "एते पादयोः अपेक्षया विशाले। अतः एते न इष्येते" इति।

तदा प्रमोदः तम् उक्तवान्– "श्रीमन्! भवतः पुत्रः वर्धिष्णुः। अतः दिने दिने तस्य पादस्य आकारः परिवर्तते एव। पादस्य यादृशः आकारः तादृश्यौ एव पादरक्षे क्रीते चेत् मासाभ्यन्तरे ते पादौ पीडयिष्यतः। अतः किञ्चिद्विशालयोः एव क्रयणं वरम्" इति।

"भवता युक्तम् एव उक्तम्। एते पादरक्षे ददातु तावत्" इति उक्त्वा पादरक्षे क्रीत्वा गतवान् सः।

'कम् उद्दिश्य कीदृशं वचनम् उक्तं चेत् वाणिज्यं वर्धेत' इति इदानीं ज्ञातवान् प्रमोदः। अतः सः अल्पे एव काले तेन वाणिज्येन प्रभूतं लाभं प्राप्तवान्।






सहस्रशः वानराः कुम्भकर्णस्य उपरि आक्रमणं कृतवन्तः। दंशनेन, नखनेन, मुष्ट्या प्रहारेण, पादप्रहारेण, आयुधप्रयोगेण, केशादीनाम् उत्पाटनेन, अन्यविधैः प्रयत्नैः च ते राक्षसान् बहुधा पीडितवन्तः। राक्षसानां शरीराणि रक्तसिक्तानि कृतवन्तः।

एतत्सर्वम् अपि लीलया सहमानः कुम्भकर्णः निरन्तरम् अग्रे गच्छन् अस्ति। बलशालिनः वानरवीराः तं निवारयितुं बहुधा प्रयत्नं कृतवन्तः। किन्तु वानराः एव पतिताः, न तु कुम्भकर्णः पतितः। कुम्भकर्णस्य पातनम् असाध्यम् इति वानरवीराणां मनसि भावना आगता।

अङ्गदः सुग्रीवः च कुम्भकर्णस्य उपरि निरन्तरं पर्वतशिखराणि पातयन्तौ आस्ताम्। किन्तु कुम्भकर्णः तु किमपि न जातम् इव चिन्तयन् निरातङ्कं तिष्ठति। सुग्रीवः पुनरपि पर्वतशिखराणि क्षिप्तवान्। तदा कुम्भकर्णः क्रोधेन सुग्रीवम् उद्दिश्य एकं शूलं क्षिप्तवान्। एतत् दृष्ट्वा हनूमान् झटिति अग्रे आगत्य शूलं गृहीत्वा खण्डयित्वा क्षिप्तवान्। तदा सर्वे वानराः हर्षेण सिंहनादं कृतवन्तः। कुम्भकर्णः एकं पर्वतशिखरम् उन्नीय सुग्रीवस्य उपरि क्षिप्तवान्। पर्वताघातेन सुग्रीवः मूर्च्छितः अभवत्। 'सुग्रीवम् उन्नीय रावणाय प्रदर्श्य रावणस्य पुरतः एव सः खादितः चेत् रावणस्य तृप्तिः, वानराणां च भीतिः। तदा भीतौ रामलक्ष्मणौ सुलभतया जेतुं शक्यौ' इति चिन्तयित्वा कुम्भकर्णः मूर्च्छितं सुग्रीवम् उन्नीय सन्तोषेण नृत्यन्



लङ्कां प्रति गतवान्।

एतत् दृष्ट्वा अपि हनूमान् निश्चिन्तं मौन स्थितवान् आसीत्। तस्य विश्वासः आसीत् यत् शीतलवायोः स्पर्शतः जागरणं प्राप्य सुग्रीवः आत्मनः रक्षणं करिष्यति इति। अतः सः वानरान् उक्तवान् यत् केनापि किञ्चिदपि भीतिः प्राप्तव्या नास्ति इति।

हनूमता यथा चिन्तितं तथैव प्रवृत्तम्। मार्गे सुग्रीवः सचेतनः जातः। 'कुम्भकर्णेन नीयमानः अहं तदीयभुजयोः उपरि अस्मि' इति ज्ञातवान् सः। लङ्कानगर्याः मार्गाः अपि तेन दृष्टाः। राक्षसैः क्रियमाणानि नृत्यानि भेरीवादनानि च तेन दृष्टानि। मूर्च्छितः अहं गृहीतः यत् तदेव एतेषां सन्तोषस्य कारणम् इति ज्ञातवान् सुग्रीवः।

सः कुम्भकर्णस्य कर्णौ नासिकां च कर्तितवान्। तदा कुम्भकर्णस्य मुखात् रक्तधाराः निर्गताः। क्रुद्धः कुम्भकर्णः सुग्रीवं भूमौ पातयित्वा पादेन मर्दयितुम् उद्युक्तः। तावता सुग्रीवः झटिति उत्थाय वीरगर्जनं कृत्वा कुम्भकर्णं हस्ताभ्यां पादाभ्यां च प्रहृत्य आकाशं प्रति उत्प्लुत्य रामस्य समीपम् आगतवान्।

सुग्रीवः हस्तच्युतः जातः यत् तेन क्रुद्धः कुम्भकर्णः पुनरपि रणरङ्गम् आगत्य वानरान् खादितुम् उद्युक्तः अभवत्। तदा लक्ष्मणः अग्रे आगत्य कुम्भकर्णम् उद्दिश्य बहून् बाणान् प्रयुक्तवान्। कुम्भकर्णः तं बाणप्रहारम् अविगणयन् रामसमीपं गतवान्।

समीपम् आगतं कुम्भकर्णम् उक्तवान् रामः— "अये कुम्भकर्ण ! भवान् इन्द्रं जितवान् स्यात्। तदर्थम् आत्मनः विषये महान् गर्वः अपि स्यात् भवतः। किन्तु अहं रामः अस्मि। भवतः वधार्थम् उपस्थितः अस्मि च" इति।

"अये राम, अहं न विराधः, न वाली, न वा मारीचः, अपि तु कुम्भकर्णः अस्मि। एतत् प्रथमं मनसि स्थापयतु। भवतः पराक्रमप्रदर्शनं प्रचलतु किञ्चित्कालम्। ततः भवन्तं खादिष्यामि अहम्" इति उक्तवान् कुम्भकर्णः।

रामः उत्तरं किमपि अनुक्त्वा तं बाणं कुम्भकर्णम् उद्दिश्य प्रयुक्तवान्, यं च सालवृक्षभञ्जने वालिवधसन्दर्भे च उपयुक्तवान् आसीत्। किन्तु तेन कुम्भकर्णः किञ्चिदपि न व्रणितः। तदा रामः वायव्यास्त्रं प्रयुक्तवान्। एतेन कुम्भकर्णस्य गदासहितः हस्तः भूमौ अपतत्।

तदा कुम्भकर्णः उच्चैः आक्रन्दनम् आक्रोशनं च कुर्वन् एकं विशालं वृक्षम् उत्पाट्य युद्धार्थम् अग्रे आगतवान्। तदा रामः ऐन्द्रास्त्रेण कुम्भकर्णस्य अपरम् अपि हस्तं कर्तितवान्। तथापि कुम्भकर्णः रामस्य उपरि आक्रमणं कर्तुम् अग्रे आगतवान्। तदा रामः अस्त्रेण कुम्भकर्णस्य पादौ कर्तितवान्। अन्ते कुम्भकर्णस्य शिरः मुण्डात् पृथक् जातम्।

कुम्भकर्णस्य मरणं दृष्टवतां राक्षसानाम् आक्रन्दनध्वनिः तत्र सर्वत्र प्रसृतः। वानराः तु सन्तोषेण करताडनं कुर्वन्तः ध्वनिं कुर्वन्तः जयकारं कृतवन्तः। रामं परितः स्थित्वा पूजितवन्तः ते। आकाशतः पुष्पवृष्टिः अपि जाता।

कुम्भकर्णस्य मरणवार्तां श्रुत्वा रावणः मूर्च्छां गतः। तस्य पुत्राः देवान्तकः, नरान्तकः, त्रिशिराः, अतिकायः च उच्चैः रोदनं कृतवन्तः। कुम्भकर्णस्य सहोदरौ महोदरः महापार्श्वश्चापि दुःखसागरे निमग्नौ जातौ।



मन्दोदर्यादीनां शैत्योपचारतः रावणः सचेतनः जातः। तस्य मनसि विचारः आगतः– 'इतः परं रामः अचिरात् एव लङ्कायाः प्रवेशं करिष्यति। मां सिंहासनच्युतं करिष्यति सः। मम राजवैभवं समाप्तं भविष्यति। सीता वशीकरणीया इति यः विचारः आसीत् सः अपि असफलः एव तिष्ठति। दैवकोपवशात् अहं निर्बलः जातः' इति। ऐदम्प्राथम्येन तस्य मनसि एषः अपि विचारः आगतः यत् विभीषणस्य हितकारकस्य वचनस्य अनङ्गीकारः अनर्थाय एव अभवत् इति।

रावणस्य म्लानतां खेदं च दृष्ट्वा त्रिशिराः उक्तवान्– "रावणेश्वर! त्रिलोकीम् अपि जितवान् भवान् एवम् अधैर्येण तिष्ठति चेत्



कथम्? अलं विषादेन। मां युद्धार्थं प्रेषयतु। रामं किं, समग्रशत्रुकुलम् एव नाशयित्वा प्रत्यागमिष्यामि। शत्रोः तात्कालिकजयं श्रुतवतः मम क्रोधः द्विगुणितः जातः अस्ति। प्रतीकारार्थं मनः त्वरते" इति।

देवान्तकः, नरान्तकः, महोदरश्चापि युद्धार्थम् अनुज्ञां प्रार्थितवन्तः। तेषाम् उत्साहं दृष्टवतः रावणस्य मनसि धैर्यम् आगतम्। सः उत्साहेन उत्थाय तान् अनुज्ञया अनुगृह्य युद्धार्थं प्रेषितवान्।

वानराणां राक्षसानां च मध्ये पुनरपि युद्धम् आरब्धम्। नरान्तकेन घोरं युद्धं कृतम्। एतत् दृष्ट्वा सुग्रीवः— 'तं मारयतु भवान्' इति अङ्गदं सूचितवान्। अङ्गदः झटिति अग्रे गत्वा नरान्तकं तीक्ष्णप्रहारैः पीडयन् अल्पे एव काले यमपुरीं प्रति प्रेषितवान्।

एतत् दृष्ट्वा क्रुद्धाः त्रिशिराः, महोदरः, देवान्तकः च सम्भूय युगपत् अङ्गदस्य उपरि आक्रमणं कृतवन्तः। त्रयाणाम् अपि युगपत् आक्रमणं दृष्ट्वा हनूमान् झटिति अग्रे आगत्य मुष्टिप्रहारेण देवान्तकं मारितवान्। अङ्गदस्य साहाय्यार्थम् आगतः नीलः महोदरं मारितवान्।

वानरवीरः ऋषभः महापार्श्वेन सह युद्धं कृत्वा तं यमलोकस्य अतिथिं कृतवान्। महापार्श्वस्य मरणं दृष्ट्वा राक्षसाः आयुधानि तत्रैव परित्यज्य पलायनं कृतवन्तः।

युद्धभूमिं गतानां राक्षसवीराणां मरणं श्रुत्वा अतिकायः स्वयं रणरङ्गं प्रति प्रस्थितवान्। पर्वतः इव स्थितं निर्भयम् अग्रे आगच्छन्तम् अतिकायं दूरात् दृष्ट्वा रामः विभीषणं पृष्टवान्— "सः राक्षसवीरः कः?" इति।

"सः रावणपुत्रः। ध्यानमालिनीनामिकायां पत्न्यां जातः सः। अतिकायः इति तस्य नाम। पराक्रमेण सः रावणसमानः। ब्रह्मदेवस्य अनुग्रहं प्राप्य सः दिव्यास्त्राणि सम्पाद्य देवेभ्यः राक्षसेभ्यः च अपायः यथा न स्यात् तथा वरं प्राप्तवान् अस्ति अपि। तेन धृतः कवचः, रथः च ब्रह्मणा एव दत्तः। अतः इतः पूर्वम् एषः बहुवारं देवान् दानवान् च जित्वा लङ्कानगरीं रक्षितवान् अस्ति। एतस्य मारणं

यदि शीघ्रं न क्रियेत तर्हि अस्माकं सेनायाः महती हानिः स्यात्" इति उक्तवान् विभीषणः।

विभीषणस्य सूचनाम् अङ्गीकुर्वन् रामः अतिकायं दृष्टवान्। तावता अतिकायः वानरसेनायाः समीपम् आगतवान्। तदा कुमुदः, नीलः, मैन्दः, शरभश्च अतिकायं सम्मुखीकृत्य युद्धं कृतवन्तः। किन्तु तेषां प्रतिरोधः अकिञ्चित्करः जातः। अतिकायस्य प्रहारेण वेदनां प्राप्य ते एव आक्रन्दनं कृतवन्तः।

अतिकायः रामं दृष्ट्वा साक्षात् अग्रे आगत्य रामस्य समीपे स्थित्वा- "भीरुभिः सह अल्पैः च सह युद्धं न करोमि अहम्। मां युद्धे सम्मुखीकर्तुम् अर्हः कोऽपि अस्ति चेत् सः अग्रे आगच्छतु नाम" इति उक्तवान्।

एतत् वचनं श्रुत्वा क्रुद्धः लक्ष्मणः अतिकायस्य पुरतः स्थित्वा धनुष्टेङ्कारं कृतवान्।

लक्ष्मणं दृष्ट्वा तिरस्कारयुक्तेन स्वरेण उक्तवान् अतिकायः– "भवान् लक्ष्मणः खलु? अल्पाकारकस्य भवतः कीदृशं बलं स्यात्? अलं साहसेन। प्राणरक्षणं चिन्तयन् मौनं प्रतिगच्छतु भवान्। 'जीवन् भद्राणि पश्यति' इति न श्रुतवान् वा? इतः गच्छतु, सुखेन जीवतु च" इति।

"शौर्यं कदापि वचनमात्रेण न प्रकाशनीयम्। तत् क्रियया प्रदर्शनीयम्।



आत्मस्तुतेः विरामः भवतु। स्वस्य पराक्रमं किञ्चित् प्रदर्शयतु तावत्" इति उक्तवान् लक्ष्मणः।

अनन्तरम् उभौ अपि युद्धे उद्युक्तौ जातौ। लक्ष्मणस्य बाणानां प्रहारं प्राप्य तदीयं बाहुबलं जानन् 'साधु वीर! योग्यः प्रतिस्पर्धी भवान्' इति वदन् अतिकायः उत्साहेन युद्धं कृतवान्। तीक्ष्णानाम् अस्त्राणां प्रहारेण लक्ष्मणं सम्यक् पीडितवान्। उभौ अपि दिव्यास्त्राणि प्रयुक्तवन्तौ। लक्ष्मणः अतिकायस्य कवचस्य भङ्गं कर्तुं बहुधा प्रयत्नं कृतवान्। किन्तु सामान्यानि अस्त्राणि तं कवचं भेत्तुम् असमर्थानि जातानि। अन्ते लक्ष्मणः ब्रह्मास्त्रप्रयोगं कृतवान्। तत् अस्त्रं



अतिकायस्य शिरः भूमौ अपातयत्।

अतिकायस्य मरणं दृष्टवतां श्रुतवतां च राक्षसानां दुःखस्य सीमा एव न आसीत्। एतां वार्तां श्रुत्वा रावणः दिग्भ्रान्तः अभवत्। वीराधिवीराः अपि राक्षसाः रामलक्ष्मणादीनां प्रहारं प्राप्य मरणं प्राप्नुवन्ति यत् तत् रावणे अधैर्यम् अजनयत्। 'वानरसेनायाः रामलक्ष्मणयोः च सामर्थ्यं सम्यक् अज्ञात्वा मया अविवेकिता प्रदर्शिता' इति भावना आगता रावणस्य मनसि। एकाकितया आगत्य लङ्कां दग्ध्वा विजयगर्वेण हसतः हनूमतः मुखं पुनः पुनः मनःपटलम् आगत्य रावणम् उपहसति स्म।

पितुः खेदं दृष्ट्वा इन्द्रजित् रावणसमीपम् आगत्य उक्तवान्– "तात! यावत् अहं जीवामि तावत् भवता विषादः प्राप्तव्यः नास्ति। मम बाणप्रहारं प्राप्य अपि जीवितः लोके कोऽपि नास्ति। रामलक्ष्मणयोः प्राणान् अहम् अपहरिष्यामि। निश्चिन्तः तिष्ठतु भवान्" इति।

"विजयशाली सन् प्रत्यागच्छतु भवान्" इति आशिषा अनुगृहीतवान् रावणः। रावणं नमस्कृत्य श्रेष्ठैः गर्दभैः युक्ते रथे उपविश्य इन्द्रजित् युद्धभूमिं प्रति प्रस्थितवान्। एतत् दृष्ट्वा सर्वे राक्षसाः विविधानि घोरायुधानि गृहीत्वा जयघोषं कुर्वन्तः सन्तोषेण तम् अनुसृतवन्तः।

युद्धभूमिं गतः इन्द्रजित् दिव्यं रथं प्राप्तुं यज्ञं कर्तुम् उद्युक्तः अभवत्। रक्षणार्थं परितः राक्षसान् नियोजितवान् सः। 'यावत् यज्ञः न समाप्यते तावत् कमपि समीपं न प्रेषयन्तु' इति राक्षसान् आज्ञापितवान् सः। तेन क्रियमाणस्य यागस्य नाम 'निकुम्भिळायागः' इति। मन्त्रपूर्वकं यदा सः आहुतीः अर्पयति स्म तदा निर्धूमः अग्निः सम्यक् ज्वलति स्म।

इन्द्रजित् ब्रह्मस्तुतिपरैः मन्त्रैः आहुतीः अर्पयति स्म। एवं ब्रह्माणं सन्तोष्य दिव्यं रथं प्राप्तवान् सः। ततः तेनैव मन्त्रेण आयुधानि अपि अभिमन्त्रितवान्। ततः तदीयः यागः समाप्तः। एवं यागं समाप्य इन्द्रजित् आयुधैः, सारथिना, रथेन च सह अदृश्यतां गतवान्।

राक्षससेना अश्वैः रथैः च सह युद्धभूमिम्

अगच्छत्। वानराः धैर्येण राक्षसान् सम्मुखीकृतवन्तः। राक्षसाः विविधैः अस्त्रैः वानरान् पीडितवन्तः। इन्द्रजित् अदृश्यरूपेण एव तिष्ठन् प्रोत्साहकवचनानि उच्चैः वदन् राक्षसान् प्रेरयति स्म। स्वयम् अपि वानरान् आयुधैः प्रहरति स्म। तस्य प्रहारैः वानराः शुष्कपर्णानि इव अधः पतन्ति स्म। एतावदेव न, गन्दमादनः, नलः, मैन्दः, गजः, सुग्रीवः, ऋषभः, अङ्गदः, द्विविदः इत्यादयः अनेके राक्षसवीराः नितरां व्रणिताः अभवन्। इन्द्रजित् कुत्र अस्ति इति ज्ञातुं तु कोऽपि न प्रभवति स्म।



इन्द्रजितः बाणाः रामलक्ष्मणौ अपि अपीडयन्। तदा रामः लक्ष्मणम् उक्तवान्– "एषः इन्द्रजित् अदृश्यरूपेण युद्धं कुर्वन् अस्ति। तं वयं संहर्तुं न शक्नुमः। अतः यदि मूर्च्छितौ इव यदि अभिनयेव तर्हि इन्द्रजित् सन्तोषं प्राप्य रणरङ्गतः निर्गच्छेत्" इति।

किन्तु तावता इन्द्रजितः बाणः रामलक्ष्मणौ वस्तुतः अपि मूर्च्छितौ अकरोत्। एतत् दृष्ट्वा इन्द्रजित् सिंहनादं कृत्वा लङ्कां प्रतिगतवान्।

"इन्द्रजिता प्रयुक्तस्य अस्त्रस्य नाम ब्रह्मास्त्रम् इति। तस्य कारणतः कति वानराः मृताः कति व्रणिताः इति आदौ ज्ञातव्यम् अस्माभिः" इति विभीषणम् उक्तवान् हनूमान्।

अनन्तरं तौ दीपशिखां गृहीत्वा युद्धभूमौ अन्वेषणं कृतवन्तौ। तत्र ताभ्यां व्रणितः जाम्बवान् दृष्टः। विभीषणः जाम्बवन्तं पृष्टवान्– "भवान् सकुशलम् अस्ति खलु?" इति।

जाम्बवतः नेत्रे व्रणिते आस्ताम्। सः विभीषणं पृष्टवान्– "मित्र! हनूमान् तु सजीवं तिष्ठति खलु? तस्य कोऽपि अपायः तु नास्ति खलु?" इति।

तदा विभीषणः आश्चर्येण जाम्बवन्तं पृष्टवान्– "रामलक्ष्मणयोः विषये किमपि अपृच्छन् भवान् हनूमतः कुशलं पृच्छति खलु? किमर्थम् एवम्?" इति।

"वत्स विभीषण! हनूमति जीवति सति, समग्रा वानरसेना नष्टा चेदपि न काऽपि चिन्ता। प्रत्युत, समग्रायां वानरसेनायां

तिष्ठन्त्यां हनूमान् नास्ति चेत् वयं जीवन्तः अपि मृताः इव" इति विभीषणम् उक्तवान् जाम्बवान्।

वृद्धजाम्बवतः एतादृशं वचनं श्रुत्वा हनूमान् अग्रे आगतवान्। जाम्बवतः पादौ गृहीत्वा नमस्कारं कृतवान् च।

"अहो, एषः स्पर्शः हनूमतः एव! वत्स! आञ्जनेय! इदानीं वानराः भवता एव रक्षणीयाः। एतत् कर्तुम् अन्यः कोऽपि न शक्नोति, ऋते भवत्तः" इति उक्तवान् जाम्बवान्।

ततः रामलक्ष्मणयोः सचेतनतासम्पादनार्थं वानराणां रक्षणार्थं च करणीयम् उपायं हनूमन्तम् उक्तवान् जाम्बवान्– "भवता समुद्रम् अतिक्रम्य हिमालयपर्वतः गन्तव्यः। तत्र उन्नते काञ्चनशिखरं कैलासशिखरं च दृश्येते। तयोः मध्ये एकः ओषधिपर्वतः दृश्यते। तत्र चतुर्विधानि ओषधिसस्यानि दृश्यन्ते। तानि ओषधिसस्यानि उज्ज्वलप्रकाशं प्रसारयन्ति भवन्ति। तेषां नाम विशल्यकरणिः, सौवर्णकरणिः, सन्धानकरणिः, मृतसञ्जीवनी चेति। एतानि चतुर्विधानि सस्यानि अविलम्बेन आनयतु भवान्। तेन वयं सर्वान् वानरान् सजीवान् स्वस्थान् च कर्तुं शक्नुमः। अतः अविलम्बेन इतः गच्छतु"इति।

अनन्तरक्षणे एव हनूमान् वायुमार्गम् आश्रित्य ततः निर्गतवान्। पर्वतान्, नदीः, अरण्यानि च अतिक्रमन् सः हिमालयम् उद्दिश्य गतवान्। कदाचित् वायुवेगेन पुनः कदाचित् मनोवेगेन च सः अग्रे गतवान्। अल्पे एव काले हिमालयपर्वतसमीपं गतवान्। हिमालयस्य विविधानि शिखराणि अपि तेन दृष्टानि। हिमालयस्थानि विविधानि पुण्यस्थानानि अपि तेन दृष्टानि। पर्वतशिखराणां मध्ये ओषधिपर्वतः अपि दृष्टिगोचरः जातः। सर्वाणि ओषधिसस्यानि स्वयं प्रकाशं प्रसारयन्ति स्म। तेषां दर्शनतः एव विशिष्टः आनन्दः उत्साहः च प्राप्तः हनूमता।





# निद्राहीनता

बहुपूर्वं काश्मीरदेशे वज्रगुप्तः नाम वणिक् आसीत्। सः वाणिज्येन प्रभूतं धनं सम्पादितवान् आसीत्। एवं प्रभूता सम्पत्तिः सम्पादिता अस्ति चेदपि तस्य तृप्तिः तु नास्ति। लाभसम्पादनस्य विविधान् मार्गान् चिन्तयन्, ते मार्गाः मया न आश्रिताः इति खेदम् अनुभवन्, तादृशेन मार्गेण ये धनसम्पादनं कृतवन्तः तेषां विषये असूयां च अनुभवन् सः दिनं यापयति स्म। अतः तदीयं मनः सदा असन्तृप्तं भवति स्म। असन्तृप्तिकारणतः सः रात्रौ निद्रां न प्राप्नोति स्म।

वज्रगुप्तस्य मित्रं जयनन्दनः। जयनन्दनः न हि धनिकः। तथापि यावान् आयः तावता एव कुटुम्बनिर्वहणं कुर्वन् सः सदा तृप्त्या जीवति स्म। कदाचित् सः वज्रगुप्तस्य गृहम् आगतवान्।

वज्रगुप्तः स्वस्य निद्राहीनतां जयनन्दन निवेद्य– "एतस्य परिहारोपायं भवान् कमपि जानाति चेत् वदतु कृपया" इति प्रार्थितवान्।

तदा जयनन्दनः मन्दहासपूर्वकम् उक्तवान्– "भवतः निद्राहीनता किमर्थम् इति अहं जानामि। वाणिज्यव्यवहारस्य चिन्ता किञ्चित्कालं न कृता चेत् भवतः निद्राहीनता अपगच्छेत्। अतः समययापनार्थं कस्मिंश्चित् सामान्ये कार्ये उद्युक्तः भवतु भवान्। तस्मिन् कार्ये चिन्तनं किमपि न भवेत्। तत् कार्यं यदा भवान् करोति तदा वाणिज्यं सर्वथा विस्मरतु। तदा अजानन् एव निद्रां प्राप्स्यति भवान्" इति।

एवं तौ यदा वार्तालापं कुर्वन्तौ आस्तां तदा मार्गे मेषाणां महान् बेङ्कारः श्रुतः। मेषपालानां हैंकारः अपि श्रुतः।



"कः एषः महान् कोलाहलध्वनिः?" इति पृष्टवान् जयनन्दनः।

"किं वदामि मम कष्टम्? ग्रामात् बहिः शाद्वलः अस्ति। शाद्वलं गन्तुम् एषः एकः एव मार्गः। अतः प्रतिदिनं प्रातः सायं च कर्णकठोरः एषः ध्वनिः मया श्रोतव्यः एव। मार्गपार्श्वे स्थितं वायु-प्रकाशयुक्तम् एतत् स्थलं योग्यम् इति मत्वा क्रीत्वा गृहं निर्मितवान्। किन्तु इदानीं दिने द्विवारं कर्णौ पिधातव्यौ भवतः। योग्येन मूल्येन एतस्य गृहस्य क्रेतारः अपि न सन्ति। अतः सर्वं मौनं सहमानः अस्मि। सर्वं मम दौर्भाग्यम्" इति खेदेन उक्तवान् वज्रगुप्तः।

एतत् श्रुत्वा जयनन्दनः चिन्तयन् क्षणकालं मौनं स्थितवान्। अनन्तरं सः वज्रगुप्तम् उक्तवान्– "समययापनार्थं कश्चन सुलभोपायः अस्ति। प्रतिदिनं शाद्वलं प्रति मेषाः भवतः गृहस्य पुरतः स्थितेन मार्गेण एव खलु गच्छन्ति? एवं गच्छतां मेषाणां गणे कति मेषाः भवन्ति इति गणयतु भवान्। नीरसस्य एतस्य कार्यस्य करणेन भवान् अजानन् एव निद्रां प्राप्स्यति। केषाञ्चित् दिनानाम् अनन्तरम् अहं पुनः आगत्य मया सूचितः उपायः फलितः वा न वा इति ज्ञास्यामि। एतन्मध्ये भवान् वाणिज्यविषयं मा चिन्तयतु। वाणिज्यनिपुणाः भवतः पुत्राः वाणिज्यभारं निर्वक्ष्यन्ति। साहाय्यार्थं समर्थाः उद्योगिनः सन्ति एव। अतः वाणिज्यव्यवहारं सर्वथा विस्मरतु भवान्" इति। एतावत् उक्त्वा सः स्वग्रामं गतवान्।

सप्ताहद्वयस्य अनन्तरं जयनन्दनः पुनरपि वज्रगुप्तस्य गृहम् आगतवान्। वज्रगुप्तस्य नेत्रे एव सूचयतः स्म यत् तेन एषु दिनेषु निद्रा एव न कृता इति। अतः आश्चर्येण पृष्टवान् जयनन्दनः– "किं भोः मित्र! मम उपायस्य फलतः अपि भवता निद्रा न प्राप्ता इति भाति" इति।

तदा वज्रगुप्तः कोपमिश्रितेन स्वरेण– "धिक् भवतः उपायम्। भवतः सूचनायाः अनुगुणं गृहस्य पुरतः उपविश्य अहम् मेषान् गणितवान्। मम ग्रामे सहस्रं मेषाः सन्ति। मम गणनायां दोषः स्यात् इति मत्वा शाद्वलं गत्वा

पुनरपि गणनां कृतवान् अस्मि। अतः मम ग्रामे सहस्रं मेषाः सन्ति इति तु सुनिश्चितम्। एतावन्तः मेषाः मम ग्रामे स्युः इति मया नैव चिन्तितम् आसीत्'' इति उक्तवान्।

''किं रे मित्र! समययापनार्थं मेषान् गणयतु इति मया सूचितम् आसीत्। किन्तु भवान् तदेव कर्तव्यं मत्वा महत्या श्रद्धया मेषान् गणितवान्। एतावान् परिश्रमः करणीयः न आसीत् भवता'' इति खेदेन उक्तवान् जयनन्दनः।

''मया क्रियमाणा गणना सर्वथा निर्दुष्टा स्यात् इति मम आशयः। अतः द्वित्रवारं सम्यक् गणितवान् अहम्। सहस्रमेषाणां दर्शनतः मया ज्ञातं यत् एतेभ्यः चतुःसहस्रप्रस्थपरिमिता ऊर्णा प्राप्तुं शक्या इति'' इति उक्तवान् वज्रगुप्तः।

तदा जयनन्दनः हसन्– ''मेषाः कति स्युः इति समययापनार्थं गणयतु इति मया उक्ते, मेषेभ्यः कियत् ऊर्णा प्राप्तुं शक्या इति चिन्तयन् अस्ति भवान्! अहो वैपरीत्यम्!'' इति उक्तवान्।

''मित्र! चनुःसहस्रप्रस्थपरिमिता ऊर्णा यदि समर्थानां तन्तुवायानां कृते दीयेत तर्हि ते द्विसहस्रपाददैर्घ्यमितस्य ऊर्णवस्त्रस्य निर्माणं कुर्युः। पाददैर्घ्यमितम् ऊर्णवस्त्रं रूप्यकद्वयमूल्येन विक्रीयेत चेदपि महान् लाभः एव'' इति उक्तवान् वज्रगुप्तः।

''अलम् इतोऽपि अग्रे कथनेन। भवता सर्वं निर्णीतम् एव। प्रथमं भवता मेषेभ्यः ऊर्णाः सङ्ग्रहणीयाः। ततः ताः तन्तुवायेभ्यः



दातव्याः। तन्तुवायाः भवते वस्त्राणि निर्माय दद्युः। तानि वस्त्राणि योग्येन मूल्येन विक्रेतव्यानि भवता। विक्रयणात् यत् धनं प्राप्यते तत् कपाटिकायां सुरक्षितं स्थापनीयम्। एतत्सर्वं कृतं चेदेव भवतः तृप्तिः। एतावत् यावत् न क्रियते तावत् भवता निद्रा सर्वथा न प्राप्यते'' इति असमाधानेन उक्तवान् जयनन्दनः।

जयनन्दनस्य वचने स्थितम् अवहेलनं ज्ञातं वज्रगुप्तेन। सः यावत् किमपि वक्तुम् उद्युक्तः तावता जयनन्दनः एव पुनः उक्तवान्– ''मित्र! गृहस्य पुरतः ये मेषाः गमनागमनं कुर्वन्ति ते अन्यदीयाः इति भवान् न जानाति इति न। वस्त्रवाणिज्यं भवदीयं न इत्यपि भवान् जानाति एव। परिसरे यानि वस्तूनि दृश्यन्ते तेषां वाणिज्यदृष्ट्या दर्शनं, ततः कियान् लाभः प्राप्तुं शक्येत इति चिन्तनं च भवतः प्रवृत्तिः। एवं निरर्थकप्रवृत्तेः कारणतः एव निद्रां न प्राप्नोति भवान्। एतत् जानन् अहं भवतः मनः वाणिज्येतरव्यवहारे मग्नं भवतु इति उद्देशेन मेषगणनां करोतु इति सूचितवान्। दौर्भाग्यवशात् तत्रापि भवता वाणिज्यबुद्धिः प्रसारिता। मित्र! अहं पराजितः अस्मि। भवतः निद्राहीनतां निवारयितुं मम समीपे उपायाः न सन्ति'' इति।

तदा वज्रगुप्तः– ''मित्र! भवतः पराजयः न। भवता जयः एव प्राप्तः। अतृप्तेः निद्राहीनतायाः च दृढः सम्बन्धः इति अद्य मया सम्यक् अवगतम्। मम रोगस्य चिकित्सा कीदृशी स्यात् इति मया ज्ञातम् इदानीम्'' इति उक्तवान् वज्रगुप्तः।

''का सा चिकित्सा? किं तत् औषधम्?'' इति मन्दहासपूर्वकं पृष्टवान् जयनन्दनः।

''अहम् अद्यैव मम वाणिज्यं पुत्राधीनं कृत्वा भगवच्चिन्तने भवादृशानां सहवासे च शेषायुष्यं यापयिष्यामि। एषः एव मया दृष्टः उपायः। भवता नितराम् उपकृतः अस्मि'' इति उक्त्वा जयनन्दनं प्रीत्या आलिङ्गितवान् वज्रगुप्तः।





# वञ्चनायाः फलम्

कस्मिंश्चित् ग्रामे पूर्वं कश्चन भूस्वामी आसीत्। ग्रामस्य पार्श्वे एव किञ्चन अरण्यम् आसीत्। तेन मार्गेण ये गच्छन्ति तेषां धनम् अमूल्यवस्तूनि च सेवकानां द्वारा लुण्ठयित्वा धनं सम्पादयति स्म सः। भूस्वामिसेवकाः कदाचित् जनान् मारयन्ति स्म अपि। अतः तेन अरण्यमार्गेण गन्तुं जनाः भीतिम् अनुभवन्ति स्म।

कदाचित् कश्चन पण्डितः राज्ञः सम्माननं प्राप्य भूस्वामिनः ग्रामस्य पार्श्वे स्थितस्य अरण्यस्य मार्गेण गच्छति स्म। अरण्यमार्गे भूस्वामिसेवकाः हठात् आक्रमणं कृत्वा पण्डितस्य सम्पत्तिं स्वायत्तीकृतवन्तः। तावदेव न, पण्डितं निर्दयं मारितवन्तः अपि।

मृतस्य पण्डितस्य शवं ते अरण्ये कुत्रापि निखातवन्तः। अतः पण्डितस्य मरणस्य वार्ता केनापि न ज्ञाता एव।

मृतस्य पण्डितस्य एकः पौत्रः आसीत्। तस्य वयः दश वर्षाणि। एषः पण्डितस्य पौत्रः कदाचित् विद्याभ्यासार्थं गुरुकुलं प्रति प्रस्थितवान् आसीत्।

मार्गे कश्चन वृद्धः तेन बालकेन मिलितः। सः बालकम् उक्तवान्– "भोः, मया सह भवान् आगच्छतु। अहं भवतः उपकारं करिष्यामि" इति।

सः वृद्धः तं बालकं वृक्षाणां मध्ये किञ्चिद्दूरं नीतवान्। तम् एकत्र उपवेश्य स्वयं भूमिखनने उद्युक्तः अभवत् अपि। अल्पे एव काले गर्तस्थले एकं पित्तलपात्रं लब्धम्। पात्रस्य मुखं वस्त्रेण आच्छन्नम् आसीत्।

वृद्धः तस्मै बालकाय तत् पात्रं यच्छन् उक्तवान्– "वत्स! एतस्य अन्तः सुवर्णनाणकानि सन्ति। एतानि भवान् नयतु। यदा भवान् अरण्यस्य क्रमणं करोति तदा रात्रिः भविष्यति। अरण्यपार्श्वे स्थिते ग्रामे कश्चन भूस्वामी निवसति। तस्य गृहे भवान्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



वासं करोतु। प्रातः अग्रे गच्छतु'' इति।

एतावत् उक्त्वा वृद्धः ततः निर्गतवान्। वृद्धस्य गमनस्य अनन्तरं बालकः पात्रस्य वस्त्रावरणम् अपनीतवान्। पात्रस्य अन्तः वस्तुतः अपि बहूनि सुवर्णनाणकानि आसन्। तानि दृष्ट्वा वृद्धं कृतज्ञतापूर्वकं स्मरन् सः बालकः पुनरपि वस्त्रेण पात्रस्य मुखं पिधाय पात्रेण सह ततः प्रस्थितवान्।

अरण्यम् अतिक्रम्य यावत् सः ग्रामं प्राप्तवान् तावता अन्धकारः प्रसृतः आसीत्। वृद्धस्य सूचनां स्मरन् सः बालकः जनान् पृच्छन् भूस्वामिनः गृहं प्राप्तवान्। वसत्यर्थं भूस्वामिनम् अनुमतिं प्रार्थितवान्। भूस्वामी अनुमतिं दत्तवान्।

रात्रौ यदा बालकः निद्रामग्नः जातः तदा भूस्वामी मन्दम् आगत्य पित्तलपात्रस्य वस्त्रावरणम् अपनीतवान्। अन्तः बहूनि सुवर्णनाणकानि दृष्ट्वा सः नितराम् आश्चर्यचकितः। सः पात्रस्थानि सुवर्णनाणकानि नीत्वा गृहस्य अन्तः स्थापितवान्। पात्रं च यथापूर्वं वस्त्रेण पिधाय स्वप्रकोष्ठं गत्वा सुखेन निद्रां कृतवान् च।

अनन्तरदिने निद्रातः जागरितः बालकः पात्रं परिशीलितवान्। पात्रस्य भारः न्यूनः इव दृष्टः। सः झटिति वस्त्रावरणम् अपनीतवान्। पात्रं तु रिक्तम् आसीत्। खिन्नः सः भूस्वामिनः समीपं गत्वा उक्तवान्– ''श्रीमन्! रात्रौ शयनसमये मम एतस्मिन् पात्रे सुवर्णनाणकानि आसन्। इदानीं तु पात्रं रिक्तं दृश्यते। मम निद्रासमये कोऽपि तानि सुवर्णनाणकानि चोरितवान्'' इति।

एतत् श्रुत्वा भूस्वामी कोपेन– ''अये, किं जल्पति भवान्? मयि चौर्यम् आरोपयति वा? कियत् औद्धत्यं भवतः? एतस्य अपराधस्य निमित्तं भवन्तं शूलम् आरोपयिष्यामि'' इति उक्त्वा सेवकान् आज्ञापितवान् यत् एतं प्रकोष्ठे स्थापयित्वा कीलयन्तु इति। भटाः तं ततः बलात् नीतवन्तः।

अनन्तरं भूस्वामी ग्रामवृद्धान् आनायितवान्। ते सर्वे भूस्वामितः भीताः सन्तः भूस्वामिना उक्तं सर्वम् अङ्गीकुर्वन्ति स्म। भूस्वामी ग्रामवृद्धान् सर्वं निवेद्य

उक्तवान्– "एतस्य बालकस्य शूलारोपणम् एव उचितम् इति अहं भावयामि। किम् अभिप्रयन्ति भवन्तः?" इति।

सर्वे ग्रामवृद्धाः "भवतः निर्णयः नितरां युक्तः" इति एकस्वरेण उक्तवन्तः।

सर्वानुमत्या बालकस्य शूलारोपणं निश्चितम्। एषा वार्ता ग्रामे प्रसारिता। सायं वध्यस्थाने जनाः सम्मिलिताः। बालकः वध्यस्थानं प्रति आनीतः। शूलारोपणं द्रष्टुं भूस्वामी स्वयम् उपस्थितः आसीत् अपि।

तावता कश्चन वृद्धः तत्र आगतः। सः भूस्वामिनः समीपम् आगत्य पृष्टवान्– "एतं बालकं किमर्थं शूलम् आरोपयन् अस्ति भवान्? एतेन बालकेन तादृशः कः अपराधः कृतः?" इति।

"मम व्यवहारस्य औचित्यं पृच्छन् कः भवान्?" इति क्रोधेन पृष्टवान् भूस्वामी।

तदा वृद्धः हसन् उक्तवान्– "अहम् एतस्य बालकस्य पितामहः अस्मि" इति।

"एवं वा? तर्हि शृणोतु तावत्। एषः बालकः मयि चौर्यम् आरोपयितुं प्रयत्नं कृतवान्। रात्रौ शयनसमये पात्रे स्थितानि सुवर्णनाणकानि प्रातः न दृश्यन्ते इति कथयन् एषः मां चौर्यं मन्यते। मम अपमाननं कर्तुम् उद्युक्तस्य एतस्य कियत् औद्धत्यम्? औद्धत्यस्य अनुगुणं दण्डः विहितः मया" इति उक्तवान् भूस्वामी।

तदा वृद्धः उक्तवान्– "आत्मनः निरपराधित्वं प्रमाणीकरणीयं भवता। यदि भवता बालकस्य सुवर्णनाणकानि वञ्चनया स्वायत्तीकृतानि स्युः तर्हि ब्रह्मराक्षसः भवन्तं नयेत्" इति।

"ब्रह्मराक्षसात् मम न काऽपि भीतिः। यदि मया दोषः आचरितः स्यात् तर्हि सः मां नयतु नाम" इति उक्तवान् भूस्वामी।

अनन्तरक्षणे कश्चन ब्रह्मराक्षसः वेगेन तत्र आगत्य भूस्वामिनम् उन्नीय आकाशमार्गेण गच्छन् अदृश्यतां गतवान्। अनन्तरकाले केनापि न ज्ञातं यत् भूस्वामिनः का गतिः जाता इति।





# पक्षपातव्यवहारः

"श्यामलपुरनामके ग्रामे जानकी नाम काचित् धनिकगृहिणी आसीत्। तस्याः द्वौ पुत्रौ, एका पुत्री च। यदा जानकी त्रिंशद्वर्षीया आसीत् तदा एव तस्याः पतिः दिवङ्गतः आसीत्। अतः सा क्षेत्रादीनां रक्षणं योग्येन क्रमेण कुर्वती सम्पत्तेः वर्धनम् अपि कुर्वती पुत्रान् अपि सम्यक् पोषितवती। युक्ते काले पुत्र्याः पुत्रयोः च विवाहम् अपि निर्वर्तितवती सा।

जानक्याः ज्येष्ठपुत्रस्य द्वौ पुत्रौ, कनिष्ठपुत्रस्य एका पुत्री, एकः पुत्रः च जाताः। पुत्र्याः अपि एका पुत्री जाता। इदानीं जानकी वृद्धा।

गच्छता कालेन जानक्याः पौत्राः प्रवृद्धाः। स्वपुत्राणां विद्याभ्यासस्य विषये यदा पुत्रौ चिन्तां प्राप्तवन्तौ तदा जानकी तौ उक्तवती– "अत्रत्यां भूमिं भवन्तौ रक्षितुं समर्थौ। अतः भवन्तौ अत्र कृषिकार्यं कारयताम्। अहं पौत्रैः सह नगरे वासं करिष्यामि। भाटकगृहे कस्मिंश्चित् वासं कुर्वती तान् योग्यं विद्यालयं प्रेषयिष्यामि। विरामदिनेषु तैः सह अत्र आगमिष्यामि" इति।

मातुः प्रस्तावं ससन्तोषम् अङ्गीकुर्वन्तौ पुत्रौ उक्तवन्तौ– "भवती यथा आवां योग्येन क्रमेण पोषितवती तथैव आवयोः पुत्रान् अपि पोषयतु। भवत्याः मार्गदर्शनं प्राप्य ते सदाचारवन्तः विनयशीलाः च भवन्तु" इति।

जानकी पौत्रैः सह नगरं गतवती। समीचीनं भाटकगृहम् अन्विष्य वासं कृतवती। योग्ये विद्यालये पौत्राणां प्रवेशम् अपि कारितवती। केषाञ्चिद्दिनानाम् अनन्तरं कदाचित् जानक्याः पुत्री जामाता च स्वपुत्र्या सह तत्र आगतवन्तौ।

पुत्री मातरम् उक्तवती– "अम्ब! भवत्याः मार्गदर्शने अग्रजयोः पुत्राः यथा विद्याभ्यासं कुर्वन्तः सन्ति तथैव मम पुत्री अपि भवत्याः मार्गदर्शने एव विद्याभ्यासं करोतु इति मम इच्छा। भवतीं प्रष्टुम् एव अहम् अत्र आगतवती" इति।

"पौत्राः यथा तथैव दौहित्री अपि मम प्रिया एव। सा एतैः सह एव अत्र निवसतु नाम" इति ससन्तोषम् उक्तवती जानकी। एवं दौहित्री अपि तत्र वासं कृतवती।

किन्तु तस्मात् दिनतः पितामह्याः व्यवहारे पक्षपातव्यवहारः दृष्टः पौत्रैः। सा सर्वान् अपि पौत्रान् प्रीत्या एव पश्यति, किन्तु दौहित्रीं किञ्चिदिव अधिकया प्रीत्या पश्यति स्म। सर्वान् अपि समानपङ्क्त्याम् उपवेश्य सर्वेभ्यः दधिघृतादिकं प्रीत्या परिवेषयति, किन्तु दौहित्र्यै अधिकं परिवेषयति। पौत्राः अनुचितं कार्यं कुर्वन्ति चेत् तर्जयति सा, किन्तु दौहित्र्याः विषये मृदुतां प्रदर्शयति। दौहित्री यत् इच्छति तत् ददाति, दापयति वा। 'नास्ति' इति, 'मास्तु' इति वा तां कदापि न वदति।

पौत्राः एतत्सर्वं जानन्ति स्म। किन्तु पितामह्याः विषये स्थितायाः भक्तेः भीतेः च कारणतः च ते मौनं तिष्ठन्ति स्म। मनसि एव खेदम् अनुभवन्ति स्म च। पौत्रेषु ज्येष्ठः विवेकः। सः नाम्नः अनुगुणं विवेकी अपि। अतः सः पितामह्याः व्यवहारस्य विषये खेदं न अनुभवति स्म।

विरामसमये सर्वे ग्रामं गतवन्तः। पौत्राः पितामह्याः पक्षपातपूर्णं व्यवहारं स्वमातरं



निवेदितवन्तः।

सर्वं श्रुत्वा उभे अपि स्नुषे खिन्ने कुपिते च। ते निश्चितवत्यौ यत् एवं किमर्थं कृतम् इति श्वश्रूः साक्षात् प्रष्टव्या इति। तावता विवेकः तत्र आगतः। विवेकः तु पितामह्यां दोषं न आरोपितवान् आसीत्। अतः ते विवेकं पृष्टवत्यौ– "विवेक! नगरे पितामह्याः व्यवहारः पक्षपातपूणः आसीत् इत्येतत् सत्यं वा?" इति।

तदा विवेकः उक्तवान्– "मया तु पितामह्याः व्यवहारे पक्षपातः कोऽपि न दृष्टः। सा स्वदौहित्रीं प्रीत्यतिशयेन पश्यति स्म, परिवेषणसमये घृतादिकम् अधिकतया परिवेषयति स्म इति तु सत्यम्। किन्तु तत्र गोपनं किमपि न आसीत्" इति।

"एवं तर्हि सा दौहित्र्यै घृतादिकम् अधिकं परिवेषयति स्म इति तु सिद्धम्। तथा किमर्थं करणीयम् आसीत् तया? सर्वेभ्यः अपि अधिकं परिवेषयितुं शक्यम् आसीत् खलु?" इति उक्तवती विवेकस्य माता।

तदा अनङ्गीकारपूर्वकं शिरः चालयन् उक्तवान् विवेकः– "अम्ब! वयं सर्वे पितामह्याः गृहस्य एव बालकाः। दौहित्री तु अन्यगृहतः आगता बालिका। अतः पितामही तां किञ्चित् प्रीत्यतिशयेन दृष्टवती। अस्मान् अपि प्रीत्या दृष्टवती एव, न तु अनादरेण। अतः पितामह्याः व्यवहारः योग्यः एव आसीत् इति भावयामि अहम्" इति।

यावत् विवेकस्य माता प्रतिवचनं किमपि वक्तुम् उद्युक्ता तावता पार्श्वस्थप्रकोष्ठे स्थित्वा सर्वं श्रुतवती जानकी बहिः आगत्य उक्तवती– "विवेकः वयसा अल्पः, किन्तु तस्य चिन्तनं योग्यम् अस्ति। मम दृष्ट्या सर्वे समानाः एव। इतः परं प्रतिमासं दधिघृतादिकम् अधिकम् एव क्रेष्यामि। सर्वे यावत् इच्छन्ति तावत् परिवेषयामि, येन समस्या परिहृता स्यात्" इति।

वस्तुस्थितेः विवेचनं सम्यक् अकृत्वा यत् चिन्तितं तद्विषये पश्चात्तापम् अनुभूतवत्यौ स्नुषे। ते श्वश्रूं क्षमां प्रार्थितवत्यौ।



# प्रकृतिवैचित्र्याणि–



## पोर्चुगीस्योद्धा

'पोर्चुगीस्योद्धा'(मेन् आफ् वार्) इति यस्य नाम, तस्य युद्धस्य च न कोऽपि सम्बन्धः, यतः तन्नामकः न योद्धा, अपि तु कश्चन समुद्रवासी जलचरः! एषः ३० सें.मी. दीर्घः १५ सें.मी. विस्तृतः च भवति प्रायः। एतस्य पृष्ठभागः नौकाभागम् अनुकरोति। अतः १८ शतके नाविकाः एतं जलचरम् ऐदम्प्राथम्येन यदा दृष्टवन्तः तदा पोर्चुगल्युद्धनौकासादृश्यं स्मरन्तः 'पोर्चुगीस्योद्धा' इति नाम कृतवन्तः। जलस्य उपरिभागे एतस्य पृष्ठभागमात्रं दृश्यते। किन्तु अधोभागे 'पोलिप्स्'नामकाः असङ्ख्याः लघुजन्तवः दृश्यन्ते। एतेषु जन्तुषु दीर्घाकारकाः ये भवन्ति ते आहारं सम्पादयन्ति, लघ्वाकारकाः च आहारजीर्णीकरणकार्यं कुर्वन्ति। पोर्चुगीस्योद्धुः उपरिभागः वायुना पूर्णः भवति। अतः एषः जलचरः जले प्लवते।

## 'काफी'पानीयस्य मूलम्

इथियोपियादेशे 'कफा'नामकः कश्चन प्रदेशः अस्ति। तत्र कदाचित् कश्चन मेषपालः दृष्टवान् यत् सस्यविशेषस्य फलानां खादनस्य अनन्तरं मेषाः विशेषोत्साहं प्राप्य पृष्ठभागस्थौ पादौ उन्नीय कूर्दनं कृतवन्तः इति। अतः सः कुतूहलेन तानि फलानि स्वयं खादितवान्। कानिचन स्वीकृत्य धर्मगुरवे अर्पितवान्। ततः धर्मगुरुः पानीयं सज्जीकृतवान्। तस्य पानीयस्य पानं कृतं चेत् निद्रा किञ्चित्कालं निवारयितुं शक्या इति विषयः तदा ज्ञातः। तानि फलानि 'कफा'प्रदेशात् लब्धानि इत्यतः ततः निर्मितस्य पानीयस्य नाम 'काफी' इति निश्चितम्।





## बीवर्जन्तोः अपायसूचनाक्रमः

बीवर्नामकः कश्चन उभयचरः जन्तुः नदीतीरे स्थितान् उन्नतान् वृक्षान् स्वस्य तीक्ष्णैः दन्तैः कर्तयित्वा पातयन्ति, येन च ते वृक्षाः सेतुः इव भवन्ति। यदा वृक्षाः पात्यन्ते तदा कोऽपि जन्तुः प्राणैः वियुक्तः यथा न भवेत् तथा कर्तुं एषः बीवर्जन्तुः स्वपुच्छेन जलं वेगेन ताडयन् उच्चं शब्दम् उत्पादयति। एतं शब्दं श्रुत्वा अन्ये बीवर्जन्तवः अपायरहितं स्थलं प्राप्य प्राणान् रक्षन्ति।।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अपनीतवान् - | Removed |
| अभिज्ञानम् - | Was identified |
| अभीष्टम् - | Desire |
| आच्छन्नम् - | Covered |
| इतिवृत्तम् - | Details of one's past |
| उत्पाटनम् - | Pulling out |
| ऊर्णा - | Wool |
| औचित्यम् - | Appropriateness |
| कूर्दनम् - | Hopping |
| क्लिन्नः - | Wet |
| ग्राहकः - | Buyer |
| तन्तुवायः - | Spider |
| त्वरते - | Makes haste |
| दग्ध्वा - | Having burnt |
| दौहित्री - | Daughter's daughter |
| नखनम् - | Scraping |
| पक्षपातः - | Partiality |
| परिक्रमणम् - | Loitering |
| पर्यावरणम् - | Environment |
| पित्तलम् - | Brass |
| प्रदूषणम् - | Dirt |
| प्रपितामहः - | Father's grandfather |
| प्रस्थः - | A unit of measure |
| महानौका - | Ship |
| मूल्याङ्कः - | Postal stamp |
| मृगालयः - | Zoo |
| मेषः - | Sheep |
| युगलम् - | Pair |
| रिक्तम् - | Empty |
| वर्धिष्णुः - | Endowed with tendency to grow |
| विक्रेता - | Seller |
| विरलतया - | Occasionally |
| विरामकालः - | Vacation |
| विहितः - | Was sentenced |
| शलाका - | Stick |
| शोभायात्रा - | Procession |
| सम्भावना - | Possibility |
| स्थगिता - | Was stopped |
| हठात् - | Suddenly |
| हरिणः - | Deer |

* * * *

# मार्गः ज्ञातः वा?

| | | |
|---|---|---|
| I. | – अये, मार्गः सुलभतया ज्ञातः वा? | You were able to find the way easily? |
| II. | – आम्। पश्यतु, सर्वाणि वस्तूनि आनीतानि आवाभ्याम्। | Oh yes! You can see the purchases we have made. |
| III. | – किन्तु भवता सूचितः आपणः तु न प्राप्तः आवाभ्याम्। | But we couldn't find the shop you suggested. |
| I. | – तन्नाम भवन्तौ उपान्त्यमार्गे वामतः परिवृत्य न गतवन्तौ। | That means you didn't turn left at the last but one road. |
| III. | – आवाम् अन्तिममार्गे वामतः गतवन्तौ। | We turned left at the last road. |
| I. | – तस्मिन् मार्गे आपणाः न सन्ति एव। अतः भवन्तौ प्रायः मुख्यमार्गपर्यन्तं गतवन्तौ। | But there are no shops there. Did you go up to the main road? |
| II. | – आम्। तत्र तु बहवः आपणाः दृश्यन्ते। | Yes! There are a number of shops there. |
| I. | – वृथा भवद्भ्यां तावद्दूरम् अटनं कृतम्। | You went over a long distance unnecessarily. |
| II. | – किन्तु तेन हानिः जाता इति न। आवां तत्र वस्त्राणि अपि क्रीतवन्तौ। | But it proved to be a good thing. We could buy the clothes that were available there. |
| I. | – प्रत्यागमनसमये कोऽपि क्लेशः न जातः खलु? | Was coming back easy for you? |
| III. | – प्रत्यागमनसमये अपि पुनः मार्गभ्रमः एव। | No there was some confusion again. |
| III. | – अटनेन आवयोः लाभः एव जातः। एतस्य प्रदेशस्य स्थूलः परिचयः प्राप्तः। | Anyway because of our wandering we now have some idea about this area. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां डिसेम्बर्-९२ मासे प्रकटयिष्यामः।


M. Natarajan


M. Natarajan

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **प्रीत्यैव वशमायाति बलवानपि गजः।**

द्वितीयचित्रम् - **प्रीत्यैव हि सन्तुष्यति प्ररुदन्नपि बालः।**

प्रेषकः - श्री सनत्कुमारोपाध्यायः, द्वारकाशारदापीठम्, द्वारका, जामनगरम्-३६१३३५


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

## आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए

समुद्री जहाज़ से रु. 105.00   वायु सेवा से रु. **252.00**

## फ्रान्स, सिंगापुर, यू.के., यू.एस.ए., पश्चिम जर्मनी और दूसरे देशों के लिए

समुद्री जहाज़ से रु. 111.00   वायु सेवा से रु. **252.00**

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

